संस्कृतविद्यासमिति-पत्रिका

# संस्कृतश्रीः

**SAMSKRITASRI**

A Monthly Journal of
Samskrit Education Society
தனி ப்ரதி
விலை ரூ. 4

OCTOBER - 2019

**ஸம்ஸ்க்ருதஸ்ரீ:**

ஸம்ஸ்க்ருத கல்விக்
கழக மாத இதழ்
௨௰௨/13-1,
செயிண்ட் மேரிஸ் ரோடு,
மந்தைவெளி, சென்னை-28

रामायणमहास्वादरससिद्धं कवीश्वरम्।
वन्दे प्राचेतसं मुर्ध्ना वाल्मीकिं मुनिपुङ्गवम्।।

ராமாயணத்தின் பெருஞ்சுவையின் ரஸத்தால் ஸித்தியடைந்தவரும் கவிகளின் தலைவரும் வருணனின் மகனும் முனிவர்களுள் ஏறானவருமான வால்மீகியை வணங்குகிறேன்.

वाल्मीकिजयन्ती १३.१०.२०१९

( 24951402

உ

# THE SAMSKRIT EDUCATION SOCIETY (Regd) MADRAS

Old 212/13-1, New No.11, St. Mary's Road, R.A. Puram, Chennai - 600 028.


Secretary & Treasurer : **Sri G. SITHARAMAN,** F.C.A.

Editor and Publisher : **S. SRINIVASA SARMA**

Associate Editor : **Dr. G. Sankaranarayanan**
Department of Sanskrit,
SCSVMV Univeristy, Enathur,
Kanchipuram, Tamilnadu
Cell : 99941 03957


---

| | | |
|---|---|---|
| 1. | ஸ்ரீமதி சாந்தா ஸ்ரீநிவாஸன், ஆழ்வார்ப்பேட்டை | 98843 12214 |
| 2. | ஸ்ரீமதி மாலதீ பாலசுப்ரமண்யம், மேடவாக்கம் | 9884158110 |
| 3. | ஸ்ரீமதி சாந்தி அசோக், மந்தைவெளி | 24951402 |
| 4. | ஸ்ரீமதி கௌரீ கருணாகரன், மைலாப்பூர், | 24320544 |
| 5. | ஸ்ரீமதி ரமாசுந்தரராஜன், சென்னை -95, | 65[illegible]35 |
| 6. | ஸ்ரீமத் பார்வதீ ராமசந்திரன் அண்ணா நகர் | 2[illegible]15719 |
| 7. | ஸ்ரீ R. முத்து கிருஷ்ண ன் கொரட்டூர் | [illegible]72430 |
| 8. | ஸ்ரீ S. ரங்கநாத சர்மா, சேலையூர் | [illegible]720 |
| 9. | ஸ்ரீமதி புவனேச்வரீ ராஜகீழ்பாக்கம் | 98[illegible]2047 |
| 10. | ஸ்ரீ K. ராஜேச்வரீ மாடம்பாக்கம் | 99[illegible]319 |
| 11. | ஸ்ரீ S. ஹரிஹரன் நங்கைநல்லூர் | 9841403859 |
| 12. | ஸ்ரீ S. அனந்தன், மதுராந்தகம் | 9894709418 |
| 13. | ஸ்ரீ P.R. சுப்ரமண்யம், ஓ.ஓ. நகர் | 23640864 |
| 14. | ஸ்ரீ R. ஸ்ரீநிவாஸகோபாலாசார்ய ஸ்ரீரங்கம் | 2430632 |
| 15. | ஸ்ரீமதி ராஜம் சுந்தர், திருநெல்வேலி | 9488326850 |
| 16. | ஸ்ரீ P.D. ஸ்ரீநிவாஸன், திருநின்றவூர் | 9445703470 |
| 17. | ஸ்ரீ R. ரங்கநாதன், காஞ்சீபுரம் | 97910 55428 |
| 18. | ஸ்ரீ C.A. ஏகாம்பரம், கோயம்புத்தூர் | 0422-2233242 |
| 19. | ஸ்ரீமதி டி.வி. ஜயலக்ஷ்மி சர்மா, புன்குன்னம், த்ரிசூர்-680 002, | 0487-2382964 |
| 20. | ஸ்ரீமதி கௌரிவேங்கடராமன், காட்கோபர், Mumbai East | 09757115154 |
| | ஸ்ரீ வி. கோதண்டராமன், Mrs. கீதா ரேகா,ஆதம்பாக்கம் | 9444469638. |

माला : ४१ October- 2019 पुष्पम् : १०

कलि : ५१२१ विकारी - तुलामासः ४१-१०

The Samskrit Education Society Established with the blessings of His Holiness **SRI MAHASWAMIGAL** of Kanchi Kamakoti Peetam in the year 1957.

**OFFICE:**
Old 212/13-1, St.Mary's Road,
Mandaiveli, Chennai – 600 028.

**PRESENT ACTIVITES**
1. Assisting study of Sanskrit.
2. Publication of books and monthly journal SAMSKRITASRI.



"DD/Cheque should be sent by Speed Post only"



**SUBSCRIPTION RATES**

| | |
|---|---|
| ANNUAL | : Rs. 40/- |
| LIFE SUBSCRIPTION | : Rs. 400/- |
| PAGE DONATION | : RS.200/- |

Subscription and donations may be sent in the form of crossed D.D./Drawn in favour of the Secretary and Treasurer.

**The Samskrit Education Society (Regd.),**
Old 212/13-1, St.Mary's Road,
Mandaiveli, Chennai - 600 028.
Ph: 044 - 24951402
Email: editorsamskritasri@gmail.com

# सम्पादकीयम्

**दिशन्ती सदा देववाणीसुवासैः**
**मनोज्ञां स्थितिं धीधनेड्यां सुलेखैः ।**
**लसन्ती यशोदीपकाशैर्ज्वलन्ती**
**सदा राजतां संस्कृतश्रीः पृथिव्याम् ।।**

**आचार्याणां शतम् माता गौरवेणातिरिच्यत** इत्यूचे भगवान् वेदव्यासविलासमहितो व्यासस्सर्वहितः। गम्भीरिमा मातॄणां नितरां वावन्दितः स्मृतिषु महर्षिकृतिषु। विजित्यात्मसौख्यापेक्षां सुतहितैकदृष्ट्या परिचरणमाबाल्यात् पोषणञ्च नान्यैः कर्तुं शक्यते। अतो मातेति देवता सकलवन्द्येत्यभिहितं निखिलमानवहितं विहितञ्च पूर्वजैः। अत आह भगवती स्मृतिः-

**संन्यस्ताखिलकर्मापि पितुर्वन्द्यो हि मस्करी।**
**सर्ववन्द्येन यतिना प्रसूर्वन्द्या प्रयत्नतः।।**

इति। किन्त्वद्यतनं दृश्यं भिन्नम्। बाह्यलोकविचारभूयिष्ठा जनाः आमुष्मिकं वृथेति मन्यमानाः आत्मनि लोकाचरणविचक्षणतां सम्भाव्य निखिलसौख्यदात्रीं सवित्रीमपि न मानयन्तीति कमुपालभामहे कलिमुताज्ञानम्? इयं स्थितिः परिवर्तनीया। ऐहिकामुष्मिकश्रेयोविधायकं मातापितृवन्दनं तद्वाक्यपरिपालनं तयोः देवताबुद्धिश्च बालेषु प्रसारणीया अंशाः। अस्माकं संस्कृतिरत्रैव प्रतिष्ठिता।पित्रोर्वन्दनं हि इह परत्र च शर्मणे भवति। तदिदं तथ्यं विस्मृतेष्विव विचरत्सु बालेषु पुनरस्माभिः **मातृदेवो भव पितृदेवो भव आचार्यदेवो भवेति** आम्नायमरन्दास्वादः प्रसारणीय येन देशोयं संस्कृतौ लोकगुरुर्भवितेति प्रार्थयते सम्पादकवर्गः।

# बालीप्रत्यभिज्ञानशतकम्

**Prof. ABHIRAJA RAJENDRA MISHRA**
Formerly Vice-Chancellor, Varanasi

सर्वसौख्यप्रदातारं योगक्षेमानुचिन्तकम्।
वन्दे बालीश्वरं नित्यम् अचिन्त्यम् परमेश्वरम्।।१।।

महामेरुकृतावासं सोमं सामर्त्यमण्डलम्।
नौमि भक्त्या महेशानं गुनुंगागुंगराजितम्।।२।।

एक एव त्रिधाऽऽत्मानं संविभज्य विराजते।
नमस्तस्मै महेशाय शूलिने जगदात्मने।।३।।

नौमि ब्रह्मशिवं शम्भुं राजसं धातृविग्रहम्।
विष्णुरूपधरं नौमि सात्त्विकं च सदाशिवम्।।४।।

शिवरूपधरं वन्दे तामसं परमं शिवम्।
वन्दे त्रिदेवतायोनिं शङ्करं परमेश्वरम्।।५।।

विकृतं तं पुनर्वन्दे भटारकालसंज्ञितम्।
मृत्युपर्यायभूतं तं शम्भुसूनुं भयङ्करम्।।६।।

उमां शम्भुप्रियां नौमि सर्वसौभाग्यदायिनीम्।
विकृतौ या भवेद् दुर्गा संहारणविहारिणी।।७।।

वन्दे भटारसंज्ञांस्तान् त्रिदशान् शम्भुविस्तरान्।
वरुणेन्द्रकुबेराग्निगुरुस्कन्दगणान्मुदा।।८।।

ततश्च शाम्भवं रूपं प्रपन्नान् प्रणमाम्यहम्।
पितॄंश्च संघयागाख्यान् कवितानान् मृदूदरान्।।९।।

एकमादौ त्रिधा पश्चात् ततश्चापि बहुप्रभम्।
महाशम्भुमहं वन्दे देवं त्रिभुवनात्मकम्।।१०।।

मेखलीकृतपाथोधिं चतुर्दिक्षु ततः परम्।
धरारत्नमहं वन्दे बालीद्वीपं हिरण्मयम्।।११।।

विषमासमपृथ्वीकं द्रुमशैलवनान्वितम्।
सान्द्रवेणुमहारण्यं नारिकेलजयध्वजम्।।१२।।

फलभाराधिकाऽऽनम्रैर्मोचाविटपिभिर्युतम्।
सल्लकोद्यानविस्तीर्णं शालिक्षेत्रोपभूषितम्।।१३।।

सुजलं सुफलं रम्यं शान्तवायुमहर्निशम्।
द्वीपोत्तमं समीडेऽहं हिन्दुधर्मसमाश्रितम्।।१४।।

आदिमे ननु ख्रिस्ताब्दे पारेसागरमागता।
भारती संस्कृतिर्यत्र स्थापिताऽभूद्यशस्विनी।।१५।।

वेदमन्त्रमयी दिव्या पौराणिककथाश्रिता।
विश्ववारा बभौ याऽत्र दधद्रामयुधिष्ठिरा।।१६।।

वेदशीर्षाभिधे रम्ये पत्तने सुमहालये।
शशास यत्र शत्रुघ्नो दानवेन्द्रो मयाभिधः।।१७।।

तं जघान शिवाऽज्ञप्तो विबुधेन्द्रोऽथ वासवः।
बाटुराद्रिमहासानौ धृतदम्भोलिसम्बलः।।१८।।

मयरक्तप्रवाहौघात् समूद्भूता ततो नदी।
दृश्यतेऽद्यापि गम्भीरा पितानू तत्र वेगिनी।।१९।।

यज्जलं मयरक्ताभं मन्यमाना महाऽशुचि।
कृषाणा बालिदेशस्य न प्रयुञ्जन्ति सेचने।।२०।।

(अनुवर्तते.....)

# அஷ்டாங்க ஹ்ருதயம்

**Prof. S. SWAMINATHAN**
Sri Jayendra Saraswathi Ayurveda College, Poonamallee

## ऋतुचर्या

**सौम्यत्वादत्र सोमो हि बलवान् हीयते रविः ।।**
**मेघवृष्ट्यनिलैः शीतैः शान्ततापे महीतले ।**
**स्निग्धाश्चेहाम्ललवणमधुरा बलिनो रसाः ।।**

अत्र हि -தக்ஷிணாயனத்தில், सौम्यत्वात्- குளிர்ச்சியினுடைய ஆதிக்யம் இருப்பதன் காரணமாக, सोमो बलवान् - சந்திரனுடைய பலம் அதிகமாக இருக்கும், रविः हीयते-சூரியனுடைய பலம் குன்றிவிடுகிறது, शीतैः-मेघ-वृष्टि-अनिलैः - குளிர்ந்த மேகம், மழை, காற்று ஆகியவற்றால், महीतले शान्ततापे स्निग्धः अम्ल-लवण-मधुररसाः - பூமியிலிருந்த சூடு குறைந்து நெய்ப்புடன் கூடிய புளிப்பு, உப்பு மற்றும் இனிப்பு சுவைகள், इह बलिनः च - இங்கு பலம் உள்ளவைகளாக ஆகின்றன.

**விளக்கம்:**

தக்ஷிணாயனம் மழை காலத்தினுடைய ஆரம்பத்தில் தொடங்குகிறது. அப்பொழுது கார்மேகங்கள் ஆகாயத்தை நன்கு சூழ்ந்திருக்கும். அதன் மேல் பட்டு வரக்கூடிய காற்று மற்றும் மழையினால் சூடாகியிருந்த பூமியானது குளிர்ந்து நெய்ப்புள்ள புளிப்புச் சுவையானது மழைக் காலத்திலும் உப்புச் சுவையானது சரத் எனும் இலையுதிர் காலத்திலும் இனிப்புச் சுவையானது முன்பனி காலத்திலும் வலுப்பெறுகின்றன.

**शीतेऽग्र्यं वृष्टिघर्मेऽल्पं बलं मध्यं तु शेषयोः ।**

बलं तु - உடல் பலமானது, शीतेऽग्र्यं- குளிர்காலங்களாகிய முன் மற்றும் பின்பனி காலங்களில் அதிகமாகவும், वृष्टिघर्मेऽल्पं - மழை மற்றும் கோடைக் காலங்களில் மிக குறைவாகவும், शेषयोः मध्यं- பாக்கியுள்ள வசந்தம் மற்றும் சரத் காலங்களில் நடு நிலையோடுமிருக்கும்.

**விளக்கம்:**

மேற்குறிப்பிட்ட பருவ காலங்களுக்கு தகுந்தவாறு உடல்வலுவை அனுசரித்து மனிதர்களுக்கு ஏற்படும் நோய் நிலைகளுக்குத் தக்கவாறு குடல் சுத்தி முறைகளாகிய வாந்தி பேதி வஸ்தி எனும் எனிமா சிகிச்சை முறை, நஸ்யம் எனும் மூக்கினுள் மருந்தை பிழிந்து விடும் வைத்தியம், இரத்தக் குழாய்களைக் கீறி கெட்ட இரத்தத்தை வெளிப்படுத்தும் முறை ஆகியவை கவனத்துடன் செய்யப்பட வேண்டியது அவசியமாகும். நோய் வராமல் தடுத்துக் கொள்ளவும் ஆரோக்யத்தை நிலைநாட்டுவதற்காகவும் இதே முறைகளைக் கையாளலாம்.

(अनुवर्तते.....)

## नीतिद्विषष्टिका

**उपकृतिरेव खलानां दोषस्य गरीयसो भवति हेतुः।**
**अनुकूलाचरणेन हि कुप्यन्ति व्याधयोऽत्यर्थम्।। १०५**

துஷ்டர்களுக்கு உபகாரம் செய்வதே பெருத்த கெடுதியை செய்கிறது. பாருங்கள், வியாதிகளுக்கு அனுகூலம் செய்தால் கோபித்துக்கொண்டு மரணத்தைக் கொடுக்கின்றன.

# रघुवंशम्

**Sri. R.RANGANATHAN,**
Sanskrit Education Society, Kanchipuram

## रघुवंशे द्वादशसर्गे पञ्चसप्ततितमः श्लोकः

**कामं जीवति मे नाथः इति सा विजहौ शुचम्।**
**प्राङ् मत्वा सत्यमस्यान्तं जीवितास्मीति लज्जिता।।**

**पदच्छेदः**

कामं, जीवति, मे, नाथः, इति, सा, विजहौ, शुचम्, प्राक्, मत्त्वा, सत्यम्, अस्य, अन्तं, जीविता, अस्मि, इति, लज्जिता।

**शब्दधातुरूपाणि**

कामं, इति, प्राक्, मत्त्वा - अव्य.

जीवति - जीवति, जीवतः, जीवन्ति जीव प्राणधारणे इति धातोः लटि प्र. पु. एक।

सा - दका. स्त्री. प्र. एक।

विजहौ - विजहौ, विजहतुः, विजहुः वि इत्युपसर्गपूर्वक ओहाक् - त्यागे इति धातोः लिटि प्र. पु. एक।

शुचं - शुचं, शुचौ, शुचः चका. स्त्री. द्वि. एक।

सत्यं - अका. नपुं. प्र. एक।

अस्य - मका. पुं. ष. एक।

अन्तं - अका. पुं. द्वि. एक।

जीविता, लज्जिता - रमाशब्दवत्।

अस्मि - अस्मि, स्वः, स्मः। अस भुवि इति धातोः लटि उ. पु. एक।

**प्रतिपदार्थः**

सा -அந்த ஸீதை, मे नाथः -என் கணவர், जीवति इति- உயிரோடிருக்கிறார் என (அறிந்து), शुचं -துக்கத்தை, कामं विजहौ -விடத்தான் செய்தாள்.(किन्तु) ஆனால், प्राक्- முன்பு, अस्य - அவரது, अन्तं- முடிவை, सत्यं - நிஜமென, मत्वा- நினைத்து, जीविता अस्मि - உயிருடன் இருந்தேனே, इति- என, लज्जिता- வெட்கமுற்றாள்.

**कोषः**

कामम् - कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम्।
शुक् - वैरं विरोधो विद्वेषो मन्युशोकौ तु शुक् स्त्रियाम्।
सत्यं - सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति।

**भावार्थः**

सीता मद्भर्ता नूनं जीवतीति हेतोः शोकं तत्याज। परं प्रागस्य नाशं यथार्थमिति निश्चित्य जीवितास्मीति सञ्जातलज्जाभवत्। अर्थात् भर्तुः मरणवृत्तान्तश्रवणमात्रेण नाहं मृता खलु इति हेतोः सीता लज्जितासीत्।।

**रघुवंशे द्वादशसर्गे षट्सप्ततितमः श्लोकः**

**गरुडापातविश्लिष्टमेघनादास्त्रबन्धनः।**
**दाशरथ्योः क्षणक्लेशः स्वप्नवृत्त इवाभवत्।।**

**पदच्छेदः**

गरुडापातविश्लिष्टमेघनादास्त्रबन्धनः, दाशरथ्योः, क्षणक्लेशः, स्वप्नवृत्तः, इव, अभवत्।

**शब्दधातुरूपाणि**

गरुडापातविश्लिष्टमेघनादास्त्रबन्धनः,

क्षणक्लेशः, स्वप्नवृत्तः - रामशब्दवत्

दाशरथ्योः - इका. पुं. ष. द्वि।

इव - अव्य.

अभवत् - अभवत्, अभवताम्, अभवन् भू सत्तायाम् इति धातोः लङि प्र. पु. एक।

**प्रतिपदार्थः**

गरुडापातविश्लिष्टमेघनादास्त्रबन्धनः-கருடனது வரவால் தளர்ந்த மேகநாதனின் அஸ்த்ர பிணிப்பையுடைய, क्षणक्लेशः - ஒரு க்ஷணமேயிருந்த கஷ்டம், दाशरथ्योः - ராமலக்ஷ்மணர்களுக்கு, स्वप्नवृत्तःइव -கனவிலே நிகழ்ந்தது போல், अभवत् -இருந்தது.

**व्याकरणविशेषाः**

गरुडापातविश्लिष्टमेघनादास्त्रबन्धनः- गरुडस्य आपातः गरुडापातः, तेन विश्लिष्टम्। मेघनादस्य अस्त्रं मेघनादास्त्रं, तेन बन्धनम्। गरुडापातेन विश्लिष्टं मेघनादास्त्रबन्धनं यस्मिन् सः।

**कोषः**

गरुडः - गरुत्मान् गरुडस्ताक्ष्यों वैनतेयः खगेश्वरः।

**भावार्थः**

रावणिः रामलक्ष्मणौ नागपाशेन बबन्ध। नागान्तकस्तु तौ नागपाशम् व्यमोचयत्। नागपाशबन्धनं काकुत्स्थयोः स्वप्नावस्थायां जातमिवाभूत्।।

(अनुवर्तते.....)

# मन्त्रार्थचिन्तनम् - २७ स्नानन्तरम् परमानन्दलहरी।

Dr. M. JAYARAMAN
Krishnamacharya Yoga Mandiram, Chennai

**आक्रान्समुद्रः प्रथमे विधर्मञ्ज-**
**नयन् प्रजा भुवनस्य राजा।**
**वृषा पवित्रे अधि सानो अव्ये**
**बृहत्सोमो वावृधे सुवान इन्दुः।।**

महानारायणोपनिषत् अनुवाकः १

पूर्वं स्नानसमये उच्चारणीयः, अनुसन्धेयश्च मन्त्रः विमृष्टः। अधुना स्नानादूर्ध्वं (अव्यवहितोर्ध्वम्) कः मन्त्रः जप्यः आनुसन्धेयः इति चेत् - उपरि प्रदत्तः मन्त्रः इति निर्दिशन्ति सायणाचार्याः।

**सायणभाष्यानुसारी मन्त्रार्थः**

समुद्रो नाम परमात्मा। समुद्रवत् सः प्रौढः। अथवा सम्मोदरूप-परमानन्दस्वरूपत्वात् वा, सः समुद्रः। सः समग्रमपि जगद् (आक्रान्) व्याप्तवान्। कदा व्याप्तवान् ? जीवात्मकृत-पूर्वकर्मानुसारं फलोदयकालः (विधर्मन्) एव (प्रथमे) सृष्टिकालः। तस्मिन् सृष्टिकाले। प्रजाः जनयन् सः समग्रमपि जगद् व्याप्तवान्। स न केवलं सृष्टिकर्ता, किन्तु भुवनस्य राजापि। तन्नाम पालकः अपि। सः वृषापि। कामानां वर्षणकर्तापि।

किञ्च, शरीरं गिरिः तस्य सानुः (सानो) शिखरं हृदयम्। कीदृशं तत् हृदयम्? पवित्रम्। ब्रह्मोपलब्धिस्थानं तत्, बाह्यैः मलैः न मलिनीक्रियते। तस्मात् शुद्धम्। तस्मिन् परमात्मनि ध्याते, मर्त्यः जन्ममरणचक्रात् रक्ष्यते, तस्मात् तत् हृदयस्थानम् अव्यम् (अव रक्षणे)। तस्मिन् हृदयपुण्डरीके भगवान् सोमः वृद्धिं प्राप्तः इति स्मर्तव्यम्। अत्र सोमशब्दस्य अर्थः कः? उमा ब्रह्मविद्यास्वरूपिणी। सा च ब्रह्मविद्या परमात्मना सह

वर्तते (उमया सहितः)। तस्मात् सोमो नाम ब्रह्मविद्यासमेतः परमात्मेत्यर्थः। स च सोमः सुवानः। जीवात्मनः धर्माधर्मकर्मप्रेरकः। किञ्च च सः इन्दुरपि - चन्द्रवत् आह्लादनकरः।

## विवरणम्

सारतः - स्नानादनन्तरं स्नानस्य जलसम्बद्धत्वात् - सर्वव्यापी जलाशयः समुद्र एव परमात्मा इति चिन्तनीयम्। स च सृष्टिकर्ता, पालकः, अस्मत्कामानां वर्षयिता इत्यपि चिन्तनीयम्। (समुद्रादेव खलु जलं बाष्पीभूय वृष्टिर्भवति।) किञ्च, हृदयस्थाने तत्त्वमस्यादि-महावाक्यरूपा ब्रह्मविद्या, तद्बोध्यः परमात्मापि स्मर्तव्यः। येन मनसि चन्द्रदर्शनेन यथा, तथा आनन्दः कश्चित् प्रवर्तते। स च अनुभवितव्यः इति। तस्मात् स्नानादनन्तरं किञ्चित् ध्यानं विधेयम्। झटिति कार्यान्तरं प्रति धावनं न। सर्वत्रापि शुद्ध-बुद्ध-मुक्तस्वरूपस्य चैतन्यात्मकस्य परमात्मनः चिन्तनं विधेयम्। तेन मनसि परमानन्दः अनुभूयते। तेनानन्देन भरिताः सन्तः, सुबुद्धयः तदात्मानः दिनस्य इतरासु क्रियासु व्यापृता भवेम इति अर्थः पर्यवस्यति। किञ्च, **'आ सुतेः आ मृतेः कालं नयेद् वेदान्तचिन्तया'** इति यद्वचनमस्ति, तस्य अनुष्ठानाय अस्य मन्त्रस्य अनुसन्धानम् उपकारि। तथाहि - स्नानं नाम काचित् देहशुद्धिक्रियैव न। तेन देहात्मबुद्धिः न विवर्धेत। तादृशभावात् साधकस्य मनसः रक्षणाय अयं मन्त्रः। स्नानोत्तरं समुद्ररूपः परमात्मा स्मारितो भवेत्, न तु देहः। तेन च आनन्दामृतसिञ्चनम् अनुदिनमपि अस्मदीयं चित्तं प्राप्नुयात्, न तु देहात्मबुद्धिम्।

इत्थं जीवनस्य प्रतिक्षणमपि ब्रह्मभावभरिततया यापयितुं मन्त्रान् प्रादुः पूर्वजा ऋषयः, अनुष्ठानपथे तत्प्रतिष्ठापितवन्तश्च। अतः नित्यजीवने वेदान्तः मन्त्रेणानेन समानेतुं शक्यः।

# संस्कृतश्लोकानुरूपः तिरुक्कुरल्

## 106. இரவச்சம்- - याच्ञाभीतिः

श्रीकलियन् रामानुजजीयर् (भूतपूर्वः),
नाङ्गुनेरि

கரவாது உவந்தீயும் கண்ணனன்னார் கண்ணும்
இரவாமை கோடி யுறும்

अनाच्छाद्य स्ववस्तूनि सानन्दं ददतोऽपि नॄन्।
अयाचनमुदारोद्धान् धनाऽऽप्तेः कोटिशो वरम्।।

இரந்தும் உயிர்வாழ்தல் வேண்டின் பரந்து
கெடுக உலகியற்றி யான்.

यदीच्छति जगत्स्रष्टा याच्ञ्या जीवनं नृणाम्।
तर्हि याचकवल्लोके सोऽपि नश्यतु दुःखितः।।

இன்மை இடும்பை இரந்துதீர் வாமென்னும்
வன்மையின் வன்பாட்டது இல்.

दारिद्र्यदुःखं याच्ञातः दूरीकुर्म इतीह धीः।
द्रढीयानाग्रहेभ्योऽपि सर्वेभ्यः सुदुराग्रहः।।

இடமெல்லாம் கொள்ளாத் தகைத்தே இடமில்லாக்
காலும் இரவொல்லாச் சால்பு.

अभावाद्भोग्यवस्तूनां दारिद्र्येऽपि कदाचन।
अयाचनगुणोद्धो हि गरीयान् सर्वभूतलात्।।

தெண்ணீர் அடுபுற்கை யாயினும் தாள்தந்தது
உண்ணலி னூங்கினியது இல்.

स्वयत्नोपार्जितात्यल्पा शुद्धोदकमिव द्रवा।
पीयते या यवागूस्तत्परं स्वादूतरं न हि।।

ஆவிற்கு நீரென்று இரப்பினும் நாவிற்கு
இரவின் இளிவந்தது இல்.

गोः कस्याश्चित् तृषाशान्त्यै अपि चेद्याच्यते जलम्।
जिह्वाया अपमानं हि याच्ञा सा जनयेद्भुवि।।

இரப்பன் இரப்பாரை எல்லாம் இரப்பின்
கரப்பார் இரவன்மின் என்று

न याचध्वं कदाप्यत्र कार्पण्याक्रान्तचेतसः।
इत्यहं याचकान् सर्वान् नूनं याचेय सन्ततम्।।

இரவென்னும் ஏமாப்பில் தோணி கரவென்னும்
பார்தாக்கப் பக்கு விடும்.

याच्ञानौर्यदि चाल्येत दारिद्र्याब्धितितीर्षया।
नीरक्षा सा विदार्येत कार्पण्यतलघट्टनात्।।

இரவுள்ள உள்ளம் உருகும் கரவுள்ள
உள்ளதூஉம் இன்றிக் கெடும்.

याच्ञादैन्यं समालोच्य द्रवीभवति मानसम्।
विनश्येत्तावदप्यत्र कार्पण्यक्रौर्यचिन्तने।।

கரப்பவர்க்கு யாங்கொளிக்குங் கொல்லோ இரப்பவர்
சொல்லாடப் போஒம் உயிர்.

कृपणानां नेति वाचं श्रुत्वा निर्यान्ति मानिनाम्।
प्राणाः कुत्र निलीयेरन् कृपणानामथात्र ते।।

## रूपकावली - गर्वभङ्गः

**Prof. VISHNU POTTY. V.S.**
Kanchipuram

**इन्द्रः** शिरसा नमामि। न मयैकेनैवैतत्सर्वं सम्पादितम्। परमत्र भवतां सर्वेषां सहायता महती आसीत्। अस्माकमेवायं विजयः। अस्माकमेवायं महिमा। अद्यास्माभिरस्मद्बलं साक्षात्कृतम्। उद्घोषयतु सर्वत्र अस्मद्विजयवार्ताम्। मुच्यन्तां सर्वे बन्दिनः। ताडयन्तु पटहान्। नृत्यन्त्वप्सरसः।

**प्रतिहारी** (प्रविश्य) चरणकमलानभिवादये। अव्याहताज्ञस्य देवस्याज्ञया नृत्तप्रदर्शनाय समागताः अप्सरसः कृतमण्डनाः सगायकवादकं आज्ञां प्रतिपालयन्त्यः द्वारि तिष्ठन्ति। पुनरत्र देवः प्रमाणम्।

**इन्द्रः** अविलम्बेन प्रवेशय।

(गायकवादकैः प्रविश्य अप्सरसः प्रणमन्ति)

**इन्द्रः** अस्मद्विजयमनुरुद्ध्य प्रवर्तमाने अस्मिन्नुत्सवे नृत्यन्ताम्। सङ्गीतकमारभ्यताम्।

(सवाद्यं गायन्ति )

**उत्फुल्लपुष्पाणि सुगन्धिवातः**
**स्वच्छाम्बुपूर्णानि सरोवराणि।**
**कूजत्पतङ्गाः मिहिरोऽतिसौम्यः**
**सर्वाणि तुभ्यं विजयं वदन्ति।।४**

(आकाशे तेजः पुञ्जमवतरति तस्य मध्यात्)

**अन्येषां बलमाश्रित्य जित्वा शत्रूनिहाहवे।**
**मिथ्याभिमानितां धृत्वा कोऽत्र शब्दं करोति भोः।। ५**

(सर्वे ऊर्ध्वमुखाः शब्दमुपलक्ष्य)

अहो महदाश्चर्यम्। महदाश्चर्यम्। घनगर्जित इव शब्दः कर्णौ भिनत्ति। अतिशयेन सर्वतो विसारित्वादप्रतिहतत्वाच्च पुरतोऽस्य तेजसो निमीलयतीव अक्षि। किमिदं महत्तेजः। पुरतः स्थातुं न शक्नुमः। कथं वा पार्श्वमभिगन्तुम्। (सर्वे भयेन कम्पन्ते)

**प्रलयमारुतवेगविघट्टितग्रहचयादिव कर्णविकम्पनः।**
**ध्वनिरयं कुरुते महदुच्चकैः दिविषदां भयमुद्धतवैभवैः।।६**

**सूर्यादपि महत्तेजः वह्नेरप्यतिदाहकः।**
**पुरतो दीप्यमानं तत् नास्ति द्रष्टुमपि क्षमम्।। ७**

(सर्वे दूरे भूत्वा )

**सर्वे देवाः** भो अग्ने। सर्व दग्धुं शक्तो भवान्।
भवत्तोऽपि अतिशयीदं तेजः किम्।

**अग्निः** मत्तोऽपि कश्चन दंदह्यमानतेजोविशेषोऽस्ति
किम् इदन्तु महदाश्चर्यमेव।

**सर्वे देवाः** तर्ह्येवं कुर्मः। भो अग्ने। भवानेवात्र तेजसा वीर्येण
शक्तोऽस्ति। उपगम्य तावद् ज्ञायतां कोऽयमिति।

**अग्निः** आम्। अवश्यमेवं करिष्यामि। ज्ञातव्योऽयं विषयः।
को भवत्येवंविधानभिगम्य तेजोविशेषयुक्तः।

(पुरतो गत्वा आकाशगततेजोऽभिभूत इवाधोमुखस्तिष्ठति)

**तेजः** कोऽसि ?

**अग्निः** अहमग्निः देवानां हविषां वोढा। त्रिजगति
मत्समानः उज्ज्वलप्रतापी कोऽपि नास्ति। वैश्वानर
इत्यपरं मम नाम।

(अनुवर्तते.....)

# यमकरत्नाकरः एका विहङ्गमदृष्टिः

**Dr.V.SOWMYANARAYANAN,**
Assistant Professor & Head, Dept., of Sanskrit,
D.G.Vaishnav College, Arumbakkam, Chennai 600 106.

२. द्विचतुर्थपादयमकं or युक्पादयमकम् इत्थम् उदाहरति-

**यो ज्येष्ठो विधिरमरव्रजतस्तुतमाद्यतानितामरसमितम्।**

**जयन्तमधुमयनं व्रजत स्तुत माद्यत-अनित-अमरसमितम्।।६-१**

३. समुच्चययमकम् बद्धपुष्पकम् यथा -

प्रतिपादं वृन्तादुपरि पुष्पमिवावस्थितत्वात् पुष्पयमकम् इत्युच्यते।

**यद्रिपुकालङ्कालं कलयति यश्चाखिलप्रकालं कालम्।**

**धृतकङ्कालङ्कालं द्विषन्तम् अर्धयति योऽम्बिकालङ्कालम्।।**

४. सन्दष्टयमकं बद्धकाञ्चीयमकं यथा-

(सन्दष्टयमकस्थानमन्तादौ पादयोर्द्वयोः)

**पतिमतिमोदयितारं दयितारं या च मानेन।**

**वचसागात् - अयितारं दयितारं याचमानेन।। ४९-९।।**

५. एकाक्षरीयमकम् यथा (श्रीदामा इत्थं कृष्णं प्रशंसति)

**आ आ आ आ आ आ आ आ आ आ आ आ आ आ आ आ।**

**आ आ आ आ आ आ आ आ आ आ आ आ आ आ आ आ।।**

आस उपवेशने अस गतौ आनु क्षेपणे-

**६) लीलालालोलोलो लालालालीलल्लोलीलः।**

**लीलालालोलोलोलालालाली ललोलीलः ।। १२-१२।।**

लीलां लालयततीति लीलालालः अलोलः अचञ्चलः लालालाः अरयः सप्तवृषभाः तेषां अलीलः- लालालालीलः तं राति ददातीति लालालालीलल्लः। अलीलः- अराः अस्य सन्तीति अरी (अली) चक्रं तं ईरयतीत्यरीरः - अलीलः (ईरयति-धरति)। लीलालालोलोलः- लियं श्लेषं लालयन्तीति लीलालाः, लीलालाश्च लोलाश्चेति लीलालालोलः।

तान् ईरयति अङ्गीकरोतीति लीलाललोलोलः- सर्वेषां कृते वात्सल्ययुक्तः। अलालालाली-अलालाः लालनहीनाः तान् न लालयतीति अलाली, अलालालाली उत लालालाली- लालान् लालयितॄन् अलाल्यति, उपलाल्यति इति लालालाली। ललः-विलासीत्यर्थः। लीलः लियं श्लेषं लाति आदत्ते इति लीलः।

लल ईप्सायां लालयते wishes/obtains ; लीङ् श्लेषणे लीयते covers; लल विलासे लसति shines with sports

६.पादादि यमकम् (चक्रबन्धे)

**यस्य भयस्य भरोमामत्राप त्रापयाभीक।**
**कामित कामित दारो नाहं नाहं भजे हेयम्।। ४८-XII**

७. द्विचतुष्पादयमकानि (चक्रबन्धे)

**कं ह्यचलाप्ता हेऽवक सत्या युक्ताऽभवन्नाथा।**
**ध्वंसितशत्रुप्रार्थित सत्या युक्ता भवन्नाथा।। ४९-XII**
**चक्रे चक्रेश सपदि काऽनेका नेह भीस्सादम्।**
**रक्षित रक्षितशोका तस्तेऽतस्तेरिपौ नव्यम्।। ५०-XII**
**श्रीतश्श्रीत धराधिप वत्सावत्सारणो दारा।**
**साङ्गा साङ्गाश्रिवश कःपाकः पापजो घोरः।। ५१-XII**

एभिः चतुर्भिः श्लोकैः ग्रन्थकर्ता स्वस्य नाम गोत्र-ग्रन्थनामानि उल्लिख्य इत्थं-

**यमकानामाकरोऽयं कंसध्वंसकथा तथा।**
**चकार तदिदं काव्यं श्रीवत्साङ्कः पराशरः।।** इति द्योतयति।

समुद्गयमकेन स्वग्रन्थं इत्थं समापयति-

**परमोऽक्षरो महीयान्नागाध्यासी स मे तु नरकान्तः।**
**परमोक्षरो महीयां नागाध्यासी समेतु नरकान्तः।।७६ XII**

(अनुवर्तते.....)

## योगरहस्यम् - २५

**Prof. S. VENUGOPALAN**
SJSACH, Nazarathpet, Chennai

संयोगो नाम धारणाध्यान(संप्रज्ञान)समाधीनां सामान्या तान्त्रिकी संज्ञा। एकस्मिन्नेव विषये (तत्त्वे) प्रवर्तमानं धारणाध्यानसमाधित्रयं **संयम**-संज्ञया शास्त्रेऽस्मिन् व्यवह्रियते। तस्य संयमस्य जयता, तन्नाम अभ्यासबलेन स्थैर्ये - दाढर्ये सम्पादिते सति समाधिप्रज्ञायाः आलोकः तन्नाम ऋतंभरत्वं भवतीति तदुत्तरसूत्रं ब्रवीति, **तज्जयात् प्रज्ञाऽऽलोकः** इति। आलोको नाम दीप्तिः। दीप्तिः नाम प्रत्ययान्तरानभिभूततया निर्मले प्रवाहे अवस्थानम् एव। तदेव ऋतंभरत्वम् इत्युच्यते। भ्रान्तिसंशयादिमलशून्यतया ध्येयतत्त्वस्फूर्तिः इति अस्य तात्पर्म्।

तथा सम्पादितस्य संयमस्य भूमिषु विभिन्नासु स्थूलसूक्ष्म-आलम्बनभेदेन स्थितासु चित्तवृत्तिषु विनियोगः कर्तव्यः साधकेन। तदुच्यते **तस्य भूमिषु विनियोगः** इति सूत्रेण। तथा च अधरामधरां चित्तभूमिं जितां जितां ज्ञात्त्वा उत्तरोत्तरासु भूमिषु **संयमः** कार्यः। अस्माकं चित्तम् अतिगहनम्। अगाधं च। तत्र कूपेषु अतिदीर्घतया कृतेषु खातेषु वप्र-सदृशतया आवरणानि निर्मीयन्ते। तत् एकस्योपरि अन्यत्, तदुपर्यन्यदिति बहुसङ्ख्याकानि वप्राणि उत्तरोत्तरं संस्थाप्यन्ते। तद्यथा तथा चित्तकूपेऽपि अनेकाः वप्रसदृशाः आवरणात्मिकाः भूमयः विद्यन्ते। ताः सर्वाः अपि जेतव्याः संयमेन। अनेन जयेन एव लब्धा तत्वस्फूर्तिः अचञ्चला भवेत्। स्थूलादारभ्य सूक्ष्माः भूमयः क्रमशः जीयन्ते योगिना। अधोऽधः विद्यमानाः भूमयः अजित्वा तदुत्तरोत्तरभूमीनां जयः दुष्करः असाध्यश्च। अत्र भूमयः सवितर्क, निर्वितर्क, सविचार, निर्विचारात्मकतया प्रधानतया चतुर्धा विभक्ताः। आसु भूमिषु शनैः शनैः स्थूलादारभ्य सूक्ष्मातिसूक्ष्मभूमिपर्यन्तं संयमं व्यापार्य ताः क्रमशः जित्वा निर्विचाराभिधायाः वैशारद्ये

अनवद्याध्यात्मिकख्यातिम् उत्पाद्य सद्भूतार्थप्रद्योतनरूपां समाधिप्रज्ञां उत्पादयेदिति तात्पर्यार्थः।

अयं संयमः इति यः सः धारणाध्यानसमाधीनां सामान्यव्यवहारार्थं कृतः। इमानि त्रीण्यपि योगाङ्गत्वात् पूर्वस्मिन् साधनपादे एव विमृष्टव्यान्यासन्। अथापि पूर्वेषां पञ्चानाम् अङ्गानाम् उत्तरेषां त्रयाणां धारणादीनां दृष्ट्या बरिरङ्गत्वात् पूर्वत्र साधनकोटौ प्रवेशितानि। तानि बहिरङ्गानि चेत् तदाक्षिप्ततया समाधिं प्रति अन्तरङ्गतया इमानि त्रीणि धारणादीनि गृह्यन्ते। तदेव सूत्रं ब्रूते, **त्रयमन्तरङ्गं पूर्वेभ्यः** इति। अत्र कस्य आधारेण बहिरङ्गान्तरङ्गव्यवहारः क्रियते? किमत्र हेतुः स्यात्? इति प्रश्नः अवश्यंभावी एव। तथा च समाधानमस्य इत्थं भवति। यमादिपञ्चकं समप्रज्ञातसमाधेः प्रतिबन्धकानां चित्त, काय, प्राण, इन्द्रियमलानां निवृत्तिं सम्पादयतीति सम्प्रज्ञातसमाधिं प्रति बहिरङ्गतां भजते। धारणाध्यानसम्प्रज्ञातसमाधयः अङ्गिनः असम्प्रज्ञातसमाधेः समानविषयतया साक्षात्स्वरूपोपकारकत्वात् अन्तरङ्गतां भजते। अतश्च बहिरङ्गान्तरङ्गभेदस्य विद्यमानत्त्वात् पञ्चान्यङ्गानि पूर्वस्मिन् साधनपादे विमृष्टानि। अन्त्यानि त्रीणि विभूतिपादे गृहीतानि। इमानि त्रीणि अपि निर्बीजसमाधिं प्रति तन्नाम असम्प्रज्ञातसमाधिं प्रति बहिरङ्गतां भजन्ते। तथा च इत्थं ग्रहीतव्यम्। सम्प्रज्ञातसमाधिं प्रति यमादिपञ्चकं बहिरङ्गम्-तन्निरूपिततया धारणादीनि त्रीणि अन्तरङ्गानि। परन्तु असम्प्रज्ञातसमाधिं प्रति इमानि त्रीण्यपि पूर्वं अन्यत्र अन्तरङ्गाणि सन्त्यपि लक्ष्यभेदात् अधुना बहिरङ्गानि भवन्ति। तदुच्यते उत्तरत्र सूत्रे **तदपि बहिरङ्गं निर्बीजस्य** इति। तथा च निर्बीजस्य = निरालम्बनस्य शून्यभावनाऽ-परपर्यायस्य समाधेः एतदपि योगाङ्गत्रयं पारम्पर्येण उपकारकत्वात् बहिरङ्गम् भवति। विषयेऽस्मिन् अधिकं विमृशामः अग्रिमपर्याये।

(अनुवर्तते.....)

# कलिकल्मषघ्नं श्रीकृष्णचरितम् - ३

## (वसुदेववचनेन देवक्याः वधोद्योगात्कंसस्य निवृत्तिः, देवकीपुत्राणां कंसकर्तृको वधश्च)

**Dr. M. VINOTH**
French Institute of Pondicherry,

देवक्याः वधोद्यमे प्रवृत्तस्य कंसस्य जुगुप्सितं कर्म दृष्ट्वा वसुदेवः तं सामवचनैः सान्त्वयामास। वसुदेव उवाच - शूरैः स्तुत्याः गुणाः यस्य तादृशो भोजवंश्यानां यशस्करश्च भवान् कथम् उद्वाहाङ्गगृहप्रवेशकर्मणि तव भगिनीं हन्तुम् उद्युक्तोऽसि? हे वीर, जन्म प्राप्तवतां सर्वेषां मरणं देहेन सह जायते एव, तत्कदाचिदद्य भवति उत वर्षशतान्ते भविष्यति। परं प्राणिनां मृत्युः निश्चित एव। किञ्च देहे मरणमापन्ने सति देही तद्देहस्थो जीवः प्राचीनकर्मवशात् तत्कर्मानुगुणं प्राक्तनं वपुः त्यक्त्वा देहान्तरं प्राप्नोति। यथा तृणजलूका इति प्रसिद्धः तृणगतः कीटविशेषः गन्तुम् उद्युक्तः सन् एकेन पादेन तिष्ठन् तृणम् अवलम्बयन् तृणान्तरम् अवष्टभ्य पूर्वतृणं त्यजति तथैव देही जीवोऽपि पञ्चत्वम् आपन्नं देहं परित्यज्य तदर्थः कर्मानुरूपं प्राक्तनं वपुः त्यक्त्वा, देहान्तरं प्रविशति। यथा च स्वप्ने देशान्तरगमानादिमनोरथाभिनिविष्टचित्तः जीवः दृष्टश्रुताभ्याम् ऐहिकामुष्मिकसुखाभ्यां तन्मनसा अनुचिन्तयन् किमपि कर्मानुगुणम् ईश्वरसृष्टं किमपि शरीरं प्रतिपद्यते तदर्थः तदेवाहम् इति मन्यते तद्वत् कर्मवशाद्देहान्तरं प्राप्य प्राक्तनं त्यजति। देहस्य पञ्चत्वसमये पञ्चसु भूतेषु मायया नानादेहरूपेण रचितेषु फलाभिमुखेन कर्मणा चोदितं नानाविकारात्मकं मनः यं यं देवतिर्यगादिरूपं प्रति धावति यं यम् आप तत्र तत्र असौ देही जीवः जायते। तदर्थः - यं यं विषयं स्मरति तं तमेव प्रपद्यमानः अनुप्रविष्टः तेन सह जायते इयमेव जीवस्योत्पत्तिर्नाम इति। यथा

अन्तरिक्षस्थम् एकरूपमेव सूर्यादिज्योतिः उदकेषु, पार्थिवेषु दर्पणादिषु च प्रतिबिम्बेन स्थितं वायोः वेगेन अनुवृत्तं सत् विभाव्यते तथा असौ जीवः स्वतः विमनुष्यत्वादिनानात्वरहितोऽपि स्वमायारचितेषु गुणपरिणामात्मकेषु शरीरेषु रागानुगतः सन् देवोऽहं, मनुष्योऽहम् इत्येवं नानाविधं मोहम् आप्नोति। तस्मात् सः पुमान् स्वस्य क्षेमम् अन्विच्छन् कस्यचिदपि द्रोहं न कुर्यात्। एवञ्चेत् तस्य कुतश्चिदपि भयं न भवति इत्येवं बहुधा हिताहितं विविच्य अन्ते, हे दीनवत्सल, एषा तव अनुजा अवध्या कुत इति चेत् विशेषणेन विवेचयति स्त्रीत्वाद्, बालात्वाद्, दैन्यपुत्रिकातुल्यत्वात्, कल्याणमयीत्वाच्चेति।

एवं सामभिः वचनैः गुणकीर्तनैः, भेदैः दृष्टादृष्टभयसूचकवचोभिश्च उपदिश्यमानोऽपि वधोद्योगनिवृत्त्यर्थं प्रेर्यमाणोऽपि सः क्रूर आसुरसम्पत्त्यभिजातः कंसः वधोद्यागात् न न्यवर्तत इति ज्ञात्वा आनकदुन्दुभिः वसुदेवः प्राप्तं कालं यावत् पत्न्याः मृत्युं परिहर्त्तुं विचिन्त्य उपायमेकं ज्ञातवान्। बुद्धिमता पुंसा यावद् बुद्धिबलोदयं यथामति यथाशक्ति उपस्थितो मृत्युः परिहार्यः। एवंकृतेऽपि यदि मृत्युः न निवर्तेत तर्हि स च न जीवस्यापराधो भवति। ततश्च सः वसुदेवः, 'यदि मम सुताः जायेरन् मत्सुतोत्पत्तेः पूर्वमेव यदि च न मरिष्यति तर्हि मृत्यवे मृत्युभूताय कंसाय तुभ्यं तान् दास्यामि' इति प्रतिज्ञां कृतवान्। अत्र कदाचित् संशयो जायेत यत् पुत्रार्पणप्रतिज्ञा किं दोषाय न स्याद् इति। तत्र उच्यते - विपर्ययो कुतो न स्यात्? तदर्थः वसुदेवस्य पुत्रः कंसं वा हनिष्यति इति किं न स्यात्? यतः ईश्वरस्य चेष्टा अतिक्रान्तुम् अशक्या। अतः सर्वथा तावद् उपस्थितो मृत्युः क्वचित् निवर्तते यथा मार्कण्डेयादेः, निवृत्तः मृत्युः कदाचित् पुनरापतेत् यथा हिरण्यकशिपुरावणादेरित्यतः तस्य प्रतिज्ञा न दोषाय इति ज्ञेयः। यथा अग्निः वने वृक्षान् प्रदहन् सन्निहितान् वृक्षान्

परित्यज्य कदाचिद् दूरस्थानेव वृक्षान् दहति तत्र च निमित्तकारणम् अदृष्टं भवति तथैव जीवस्य शरीरसंयोगवियोगयोगयोः तदर्थः जन्ममरणयोरपि हेतुः अचिन्त्यः भवति। एवं स्वप्रज्ञावधि विचार्य सः वसुदेवः तं पापोद्युक्तं कंसं बहुमानपूर्वकं पूजयामास। प्रसन्नवदनाम्भोजः वसुदेवः उपतप्तेन मनसा, बहिः हसन् कंसं प्रति इदम् अब्रवीत् - हे सौम्य, तव अस्याः स्त्रियाः सकाशान्मृत्युभयं नास्ति, किन्तु अस्याः पुत्रादेव यथा अशरीरिणी वाग् आह तथा। अतः यस्मात् तव भयमुत्थितं तदस्याः पुत्रान् तुभ्यं समर्पयिष्यामि इति।

ततः तस्य वसुदेवस्य वाक्याभिप्रायं जानन् कंसः भगिन्याः वधान्निवृत्ते सति वसुदेवः प्रीतः सन् स्वगृहं प्राविशत्। अथ गर्भधारणयोग्यकाले समुपस्थिते प्रतिसंवत्सरं सा देवकी अष्टौ पुत्रान् एकां कन्यां च सुषुवे। तदा अनृतभाषाणात् भयविह्वलः सः वसुदेवः कीर्तिमदाख्यं प्रथमं पुत्रं दुःखेन कंसाय अर्पयामास। साधूनां दुस्सहं किन्नु अस्ति? सर्वमपि ससुहमेव। तदर्थः पुत्रविपत्तिरपि सुसहैव इति। तथा विदुषां किन्नु अपेक्षितम्? न किमपि। अयमर्थः शरीरतदनुबन्ध्यादिकम् अपेक्षतिं नास्ति इति। तथा कदर्याणां क्षुद्राणाम् अकार्यं किमस्ति? धृतात्मनां दुस्त्यजं किमस्ति? सर्वमपि सुत्यजमेव इत्यर्थः। ततः वसुदेवस्य तादृशं समत्वं सत्याचारपूर्वकं व्यवहारं च दृष्ट्वा कंसः तमिदम् अब्रवीत् - हे राजन्, मम अस्मात् कुमाराद्भयं नास्ति, युवयोः अष्टमात् पुत्रादेव मम मृत्युः विहितः खलु। अतोऽयं तव कुमारः गच्छतु इति। तस्य तद्वचनं श्रुत्वा वसुदेवः तथा इत्यङ्गीकृत्य सुतम् आदाय ययौ। किन्तु अनवस्थितचित्तस्य तस्य कसंस्य तद्वचनं श्रुत्वा आनकदुन्दुभिः तदुक्तं वाक्यं न अभ्यनन्दत यतः 'अव्यवस्थितचित्तस्य प्रासादोऽपि भयङ्करः' इति स्मृतिः।

ततः भगवान् नारद आगत्य कंसाय एवं कथयामास - हे भारत, व्रजे ये नन्दाद्याः गोपाः वर्तन्ते, याश्च तेषां योषितः वर्तन्ते, ये वसुदेवाद्याः वृष्णयः वर्तन्ते, याश्च देवक्याद्याः यदुस्त्रियः वर्तन्ते, तयोः नन्दवसुदेवयोः ये च बान्धवाः वर्तन्ते ते सर्वेऽपि देवताप्रायाः तदर्थः देवतुल्याः इति। ये तु कंसम् अनुव्रताः ते सर्वे असुराः इति। नारदस्य एतत्सर्वं वचनं भूमेः भारायमाणानाम् असुराणां भगवत्कर्तृकं वधोद्यमपूर्वकम् इति ज्ञेयम्। ततः नारदस्य गमनानन्तरं कंसः यदून् सुरान् इति, देवक्याः गर्भे जायमानं पुत्रं विष्णुम् इति च मत्वा देवकीं वसुदेवं च कारागृहे आबध्य अरिष्टशङ्कया तयोः देवकीवसुदेवयोः जातं पुत्रं जघान। निर्घृणः कंसः कथं हतवान् इति चेत्तत्र उच्यते - प्रायशः भुवि राजानः परप्राणैः आत्मप्राणतर्पकाः लुब्धाः मातरं, पितरं, भ्रातॄन्, सुहृद इति सर्वानपि घ्नन्ति खलु इति। किञ्च नारदवाक्यैः पूर्वजन्मनि विष्णुना हतं कालनेमिम् अस्मिन् जन्मनि आत्मरूपेण जातं जानन् सः कंसः यदुभिः सह विरोधं कृतवान्। यादवानाम् अधिपं स्वपितरम् उग्रसेनमपि निगृह्य स्वयं कंसः जनपदान् उपभुक्तवान् इत्येवं श्रीमद्भागवते श्रीकृष्णावतारपोक्रमाख्यपरः प्रथमोऽध्यायः समाप्तिमेति।

(अनुवर्तते.....)

## नीतिद्विषष्टिका

**परिवादे दशवदनः पररन्ध्रनिरीक्षणे सहस्राक्षः।**
**सद्वृत्तवित्तहरणे बाहुसहस्रार्जुनो नीचः।। १०६**

நீசனுக்கு பிறரை தூஷிப்பதில் ராவணன்போல் பத்து வாய்கள். பிறர் ரஹஸ்யங்களை அறிவதில் இந்திரன்போல் ஆயிரம் கண்கள். ஸஜ்ஜனங்களின் தனத்தை அபஹரிப்பதில் கார்த்தவீர்யார்ஜுனன் போல் ஆயிரம் கைகள்.

# त्रिविधमौषधम् - १४

Sri.S.BALASUBRAMANIAN
Ms. B. RENGA PADMINI
IV BAMS, Sri Jayendra Saraswathi Ayurveda College, Chennai

अथ अपस्मारे मन्त्राणां प्रयोगं पश्यामः।

## २. अपस्मारविज्ञानम्

अपस्मारोन्मादयोर्मध्ये कथं विशेषः भवति?

**अनिमित्तागमाद्व्याधेर्गमनादकृतेऽपि च।**
**आगमाच्चाप्यपस्मारं वदन्त्यन्ये न दोषजम्।।**
**क्रमोपयोगाद्दोषाणां क्षणिकत्वात्तथैव च।**
**आगमाद्वैश्यरूप्याच्च स तु निर्वर्ण्यते बुधैः।।**
**देवे वर्षत्यपि यथा भूमौ बीजानि कानिचित्।**
**शरदि प्रतिरोहन्ति तथा व्याधिसमुद्भवः।।**
**स्थायिनः केचिदल्पेन कालेनाभिप्रवर्धिताः।**
**दर्शयन्ति विकारांस्तु विश्वरूपात् निसर्गतः।।**
**अपस्मारो महाव्याधिः तस्माद्दोषजमेव तु।**

(सु.उ.६१/१७-२१)

परन्तु अपस्मारोऽपि उन्मादोक्तग्रहाणाम् अनुबन्धेन प्राप्तुं शक्यः इति चक्रपाणिदत्तेन आयुर्वेददीपिकाख्यायां चरकव्याख्यायाम् उक्तम्- अतः यदा अनुबन्धेन ग्रहबाधाः संभवन्ति तदा मन्त्रादिप्रयोगेण तदुपशान्तिं कर्तुं शक्नुमः। उक्तं हि चरकचिकित्सायाम् -

**यस्यानुबन्धस्त्वागन्तुः दोषलिङ्गाधिकाकृतिः।**
**दृश्यते तस्य कार्यं स्यादागन्तून्मादभेषजम्।।**

(च.चि.१०/५३)

आगन्तून्मादभेषजमिति पूर्वोक्ताः ग्रहोपशमनार्थाः प्रयोगाः। सुश्रुते च रुद्रपूजा करणीयेत्युच्यते। इत्यत्रास्माभिः भूतविद्यायामुक्ताः

केचित् मन्त्रप्रयोगाः दृष्टाः।

## शालाक्यतन्त्रं नाम किम्?

**शालक्यं नाम ऊर्द्ध्वजत्रुगतानां श्रवणनयनवदनघ्राणादि-संश्रितानां व्याधीनामुपशमनार्थम्।** (सु.सू.१/७(२)) परन्तु आयुर्वेदशास्त्रे शालाक्यतन्त्रे मन्त्राणां प्रयोगः न पृथगुक्तः भवति विस्तृतरूपेण। परं, बालग्रहादिषु नेत्रावस्थाः पृथगुच्यन्ते- यथा - नागग्रहग्राहितलक्षणानि - **रक्ताक्षं क्रोधनं स्तब्धदृष्टिं वक्त्रगतिं चलम्।।** (अ.हृ.उ.४/१९) रक्ताक्षमिति लोहिताक्षं; स्तब्धदृष्टिमिति निश्चलदर्शनम्; नेत्रौ सम्बन्धेन एव इमौ लक्षणानि। तथापि पुनरुक्तम् बालग्रहेषु स्कन्धग्रहगृहीतपुरुषलक्षणमुच्यते - **तत्रैकनयनस्रावी शिरो विक्षिपते मुहुः।** (अ.हृ.उ.३/६) इह उदाहरणार्थं एकः एव श्लोकः उक्तः भवति। एवमस्ति शालाक्यतन्त्रभूतविद्ययोः सम्बन्धः। एवं भूतविद्योक्तानां मन्त्राणां प्रयोगः शालाक्ये अपि युज्यते।

इदानीं शल्यतन्त्रे मन्त्राणां प्रयोगं पश्यामः। **शल्यतन्त्रम् एव मन्त्राः शल्यतन्त्रस्य निर्वचनम् -तत्र शल्यं नाम विविधतृण-काष्ठपाषाणपांशुलोहालोष्टास्थिबालनखपूयास्रावदुष्टव्रणान्तः शल्योद्धरणार्थं, यन्त्रशस्त्रक्षाराग्निप्रणिधानव्रणविनिश्चयार्थं च।** (सु.सू.१/७(१))

सुश्रुतसंहिता शल्यतन्त्रे श्रेष्ठा उच्यते। कायचिकित्सिते वयं पूर्वकर्म, प्रधानकर्म, तथा पश्चात्कर्म इति दृष्टवन्तः। शल्यतन्त्रे अपि एतत् त्रिविधं कर्म उक्तं भवति। विशेषेण मन्त्राणां प्रयोगः पूर्वपश्चात्कर्मणोः एव उक्तः भवति। तत्र प्रधानकर्माणि अष्टविधशस्त्रकर्माणि उच्यन्ते - छेदनं,भेदनं, लेखनं, वेधनम्, एषणम्, आहरणं, विस्रावणं, सीवनमिति। प्रत्येकं शस्त्रकर्मणः पूर्वपश्चात्कर्माणि विद्येते। तयोः पूर्वपश्चात्कर्मणोः उपयोगे मन्त्रप्रयोगः अपि सामान्यतया भवति।

(अनुवर्तते.....)

# शास्त्रं ज्योतिः प्रकाशार्थम् - १०

**Ms. DHWANI J.**
IV BAMS, Sri Jayendra Saraswathi Ayurveda College, Chennai

गतमासे दिवास्वप्नरात्रिजागरणविषयेऽस्माभिः काचिल्लघ्वी चर्चा कृता। साम्प्रतिके लौकिककार्यग्रस्तत्वात् प्रायः सर्वोऽपि जनः कदाचित्तु स्वजीवने दिवास्वपनं रात्रिजागरणं च सेवते एव। यद्यपि सकृत्सेविताभ्यामाभ्यामसाधुनिद्राभ्यां न महान् कश्चिद्दोष उत्पद्येत, तथाऽपि आसाधुनिद्रायाः सतताभ्यासात् शरीरमनसोः हानिर्भवत्येवेत्यत्र नास्ति लेशोऽपि संशयस्य।

आधुनिकाः यथा वदन्ति प्रत्येकमपि मनुष्यः ८ होराः स्वप्यादिति, नास्मदायुर्वेदाचार्याः तथा निर्दिशितवन्तः। यतो हि प्रकृत्या केचित् स्वल्पनिद्राः, केचित् बहुनिद्राश्च भवन्ति। वायुः पित्तं कफश्चेति ये उच्यन्ते त्रयः शारीरिकदोषाः, तेषां प्राकृतबाहुल्यात् केचित् वातलप्रकृतिकाः सन्ति, केचित् पैत्तिकाः, केचित् श्लैष्मिकाश्च। अपि चात्र द्वन्द्वप्रकृतयः वर्तन्ते, त्रयाणां च समत्वात् समप्रकृतयोऽपि। नानाविधानामित्थं प्रकारेण विभज्यमानानां प्राणिनां नैकान्तेन निद्राकालनियमार्थः कश्चिदखण्डः विधिः स्यादिति आयुर्वेदधीः। सर्वदा समययन्त्रसूच्याः भीत्या धावद्भिरस्माभिः साम्प्रतिकैः निद्रा सावधानतया पाल्या भवति। तदर्थमादौ निद्रायाः विषये मौलिकाः केचिदंशाः अस्माभिः ज्ञातव्याः सन्ति, येषां च अवगमनपूर्वकप्रयोगेण सुखनिद्रा साध्वी स्यात्।

तत्रादौ विचार्यते किन्नामेयं निद्रेति। निदि कुत्सायामिति धातोः व्युत्पन्नत्वादुच्यते, **निन्द्यते इति निद्रा** इति। सत्यपि निन्द्यत्वे, कथं

निद्रयैव सुखदुःखादीनां प्राप्तिरुक्ता इति गतमासे चर्चितम्। अधुना, कथमियं निद्रा प्रभवतीति विचारयामः। उच्यते -

**यदा तु मनसि क्लान्ते कर्मात्मानः क्लमान्विताः।**
**विषयेभ्यो निवर्तन्ते तदा स्वपिति मानवः।।**

(चरकसंहिता - सूत्रस्थानम् - २१)

कर्मात्मानः इन्द्रियाण्युच्यन्ते। यदा तु अन्तःकरणं मनः क्लान्तं भवति, शिष्टानि चेन्द्रियाणि क्लान्तानि भवन्ति, तदा एकादशैतानीन्द्रियाणि (पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, उभयात्मकम् अन्तःकरणसंज्ञकं मनश्च) स्वेषां विषयान् इन्द्रियार्थान् न गृह्णन्ति। यथा क्लान्तं चक्षुः न रूपं गृह्णातीत्यादि। एवं सतौ इन्द्रियाणि विषयेभ्यो निवर्तन्ते - इन्द्रियेन्द्रियार्थसन्निकर्षणप्रयत्नात् विरमन्तीति यावत्। तदा च मानवः स्वपितीत्युक्तम्। अतश्चैव चरकव्याख्याकारेण चक्रपाणिदत्तेन उच्यते- **स्वप्नो निरिन्द्रियप्रदेशे मनोऽवस्थानम्** इति। मनोहरं ननु- सुश्रुताचार्येण निद्रोत्पत्तिः इत्थं वर्णिता -

**हृदयं चेतनास्थानमुक्तं सुश्रुत देहिनाम्।**
**तमोऽभिभूते तस्मिंस्तु निद्रा विशति देहिनाम्।।**

(सुश्रुतसंहिता - शारीरस्थानम् - ४)

चेतनायाः यत्स्थानं हृदयाख्यं तदुपरि तमश्छादनं यदा भवति, तदा निद्रा प्रभवति। सेयं निद्रा **विशतीति** क्रियापदप्रयोगेण personification krtam. न केवलमियं निद्रा मनुष्यान् प्रभावयति, अपि तु सर्वानपि प्राणिनः प्राकृतत्वेन अभिस्पृशत्येषा। उच्यते हि -

**निद्रा तु वैष्णवीं पाप्मानमुपदिशन्ति, सा स्वभावत एव सर्वप्राणिनोऽभिस्पृशति। तत्र यदा संज्ञावहानि स्रोतांसि**

**तमोभूयिष्ठः श्लेष्मा प्रतिपद्यते तदा तामसी नाम निद्रा संभवत्यनवबोधिनी सा प्रलयकाले तमोभूयिष्ठानामहःसु निशासु च भवति रजोभूयिष्ठानामनिमित्तं सत्त्वभूयिष्ठानामर्धरात्रे क्षीणश्लेष्मणामनिलबहुलानां मनःशरीराभितापवतां च नैव सा वैकारिकीभवति"** (सुश्रुतः)

वैष्णवी नाम विष्णुशक्तिः। विष्णुपदमेव खलु सर्वव्याप्तित्वं दर्शयति निद्रायाः। अपि चैषा पाप्मोपदिष्टा। इदं च पाप्मात्वं तस्याः कुत्सितत्वं निरूपयति। अग्रे चास्याः प्रभवः वर्ण्यते। अस्मच्छरीरे नैकानि स्रोतांसि वर्ण्यन्ते आयुर्वेदशास्त्रे - यथा रक्तवहानि कानिचित्, मूत्रवहानि कानिचिदिति। तथैव कानिचित् संज्ञावहानि उच्यन्ते। स्रोतांसि न सर्वाण्यपि गोचराणि भवन्तीत्यतः नास्माभिः संज्ञादिवाहानां स्रोतसां दैर्घ्यस्थौल्यादिकं प्रष्टव्यम्। सन्त्येव स्रोतांसि यानि संज्ञां वहन्ति, यैरस्माकं शरीरस्य विभिन्नाङ्गप्रत्यङ्गानि आत्मना सम्पर्कं कुर्वन्ति। यदा चैतानि संज्ञावाहकानि स्रोतांति तमोभूयिष्ठेन तमोबहुलेन श्लेष्मणा कफाख्येन शरीरदोषेण पूर्यन्ते, तदा या निद्रा प्रभवति तस्याः तामसीति नाम। सैषा तामसी प्रलयकाले मृत्युकाले संभवति, अतश्चैव सा अनवबोधिनी इत्यच्यते, यतो हि नास्याः पुनर्बोधः विद्यते। स्वाभाविकी पुनर्निद्रा तमोभूयिष्ठानां प्राकृतत्वेनैव श्लैष्मिकानां प्राणिनां अहस्सु निशासु (दिने रात्रौ चापि) भवति, रजोभूयिष्ठानां प्राकृतत्वेन रजोगुणबहुलानामनिमित्तं प्रभवति - रजसः चलत्वात् कदाचित् दिवा कदाचिद्रात्राविति, सत्त्वभूयिष्ठानां पुनः प्राणिनामर्धरात्रौ प्रभवति। क्षीणश्लेषमणामित्यादौ वैकारिकी निद्रोच्यते।

(अनुवर्तते.....)

## समस्तलोकव्याप्तः धर्मः உலகம் பரவிய மதம்
### (महास्वामिनां वचःसमुद्धरणपूर्वकम्)

**Dr. S. THIAGARAJAN**
Department of Oriental Studies & Research,
SASTRA - Deemed to be Unviersity, Thanjavur

एवं हि, बहोः कालात् प्राक् सर्वत्रापि वेदधर्मः एव आसीदिति काचन स्थितिः। ततः तत्र तत्र नवधर्माः उदभूवन्निति स्थितिः। ततः एते सर्वेऽपि धर्माः ह्रासतां गताः इव क्रिस्तुः, इस्लाम्, बौद्धमित्येते एव तत्र सर्वत्र व्याप्ताः इति स्थितिः। एतस्मादनन्तरं, चरित्रे सुदृढीकृते काले पुनः इदानीं मया यथोक्तपूर्वं हिन्दुनागरिकसंपत्तिवत् बहुषु देशेषु मुख्यतया प्राच्यदेशेषु जीवत्वं प्राप्ता इति काचन स्थितिः। अस्मिन्नेवावसरे अंकोरवाट् (कम्बोडियादेशीयः), पेरापुदूर्, ब्रह्मपणन् इत्यादयः बृहत् बृहत् द्रविडदेवालयाः तत्र प्रादुरभवन्। अस्मिन्नेव काले अस्माकं तिरुप्पावै तथा तिरुवेम्पावै इतीमौ अपि सयामदेशं (अधुना ताय्लान्द् इत्यभिधीयते) प्रापतुः।

अस्य प्रमाणत्वेन अधुना अपि प्रतिवर्षम् यथा इह भारतदेशे अस्माभिः इमौ पारायणं क्रियेते तथैव तस्मिन्नेव धनुर्मासे तत्रापि महानुत्सवः प्रचलति। उभावपि गाने (पावै इति द्रविडभाषायाम् अभिधीयते) शैवं वैष्णवं च मेलयतीव अस्मिन्नुत्सवे सयां देशे शिववेषधारिणः कस्यचन विष्णोः दोलोत्सवं (दोलायां संस्थाप्य दोलायमानं) कुर्वन्ति। तर्हि तेषां पावै-ग्रन्थविषये यत्किमपि ज्ञानमस्ति वा इति पृच्छामश्चेत्, न। किञ्चिदपि न जानन्ति। तथा सति उत्सवोऽयं

धनुर्मासे प्रचलति इत्यस्मादेव कारणात् पावै-ग्रन्थाभ्यां सह अस्य संबन्धं संस्थाप्य कथनम् अनुचितमिति भायात्। परं किमर्थम् अहमेवं वदामि इति चेत् - ते उत्सवममुं ट्रियम्पावै, ट्रिपावै (Triyambavai, Tripavai) इति कथयन्ति। अधुना बैबिल् अध्येतॄणाम् उपनिषद्विषयज्ञानाभावेऽपि केवलं ततः आगतानां कथानां ज्ञानवत् तायलान्देशीयानाम् अद्यत्वे यद्यपि पावैग्रन्थौ पारायपथि न भवतः तथापि अस्मिन्नेव धनुर्मासे शिववेषधारिणः क्रियमाणस्य दोलोत्सवस्य ट्रियम्पावै, ट्रिपावै इति केवलं नाम मात्रम् अवशिष्टमस्ति। चरित्रकाल एव एतादृशानि परिवर्तनानि समभवन् इति चेत् त्रिचतुस्सहस्रवर्षेभ्यः प्राक्तनाः बहवः समयाचाराः विदेशेषु अवश्यं परिणमिता एव खलु स्युः। यावन्तोऽपि परिणामाः भवन्तु तथाऽपि सर्वत्र वेदचिह्नानि अत्र वर्तमाने इति स्वसत्तां सूचयन्ति।

चरित्रकालेभ्यः प्राक्तनाः इति निर्दिश्यमानानां गणजातीयानां धर्मेष्वपि अस्माकं धर्मचिह्नानि वर्तन्ते इति चेत् कोऽर्थः ? तावत्कालेभ्यः प्राक् येषु दूरदेशेषु नागरिकजीवनमेव नासीत् तेषु देशेषु भारतदेशात् अधिक्रमणाय वाणिज्याय वा गत्वा अस्माकं नागरिकं प्रसारितवन्त इति चेत्, तद्युक्तं न भवति। अत एव, अस्मात् (देशात्) नीत्वा तत्र न निविष्टम्, (परम्) आदौ संपूर्णेऽपि विश्वे वेदधर्म एव (प्रचलितः) भवेत् इति मे भाति। ततः ते धर्माः परिणामं प्राप्य अधुना तत्तद्देशीयः प्राकृतधर्म इति चिन्त्यमानाः भूत्वा, ततः परं तत्रापि चरित्रकालान्तर्गताः क्रिस्तु-बौद्ध-इस्लाम् धर्माश्च प्रचारिताः स्युः।

(अनुवर्तते.....)

# Ekajīvavādaḥ according to Vedāntasiddhāntamuktāvalī of Prakāśānanda

Sri. SRIPATHY
Research Scholar, Dept. of Sanskrit & IC, SCSVMV

Moreover, it is also not necessary to object on the plurality though the Self is one, eternal, non-dual and bliss in its own nature. It is by associating itself with nescience becomes *jīva* and falsely surmises the bodies of Gods, man, fourteen worlds, etc. Of these bodies, one is God and another is a man. There is Hiraṇyagarbha as the creator of all things, Viṣṇu as the preserver and Rudra as the destroyer with the limiting conditions of *rajas*, *sattva* and *tamas* respectively which manifests various powers of these three Gods. Further, again there is an individual man who thinks within himself that "I am a *Brāhman*; having served the Gods with pūja, etc., and acquiring the prescribed means of *śravaṇa*, etc., shall gain liberation." The Self, though in its own nature is Brahman itself, is considered by illusion as a manifold in the waking state. Similarly, the Self, putting to an end the world of waking consciousness and being aided by the defects of sleep, surmises plurality of world which seems to be similar to that of waking state and falsely imagines that Vasiṣṭha and other seers got

liberation and others are in bondage and I shall get liberation. Like the dream experience which is not real, the Self by putting an end to the dream state enters into waking state imagines like the dream and considers the plurality. Similarly, Self enters into a deep sleep state in which there are no false imaginings. Thus, the Self which is non-dual, through its association with nescience, termed as *jīva* i.e. the transmigratory individual. Therefore, other than Self, there is no separate *jīva*.

Again, after realisation, from the viewpoint of pure Self, there is no plurality in the world or *jīva* apart from pure Self or Brahman. From this viewpoint there is no *baddha* and *mukta*. Moreover, it is similar to the dreamer who perceives nothing after coming out of his sleep. Here, there is no imagination of plurality by the main *jīva*. During transmigration, the Self due to its accumulated merits adopts the methods of *śama*, *dama*, etc., and by the grace of guru and *śāstras* practices *śravana*, *manana* and *nididhyāsana* of the scriptural passages such as "That thou art" and realises its original nature as non-dual and pure Brahman which is devoid of nescience. Thus the individual remains in his own nature without any thought of second entity.

# महाभारते मोक्षधर्मपर्वणि वेदान्तविचारः
## (मोक्षधर्मसाधनानि)

**Sri. K. KALIVARADHAN**
Research Scholar, SCSVMV, Kanchipuram

**उपक्रमः**

**नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।**
**देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ।।**

भारतदेशस्य संस्कृतेः सभ्यतायाश्च यथायथत्वपरिमाणावगमाय इतिहासपुराणानां महत्वं नितरामस्ति। इतिहासपुराणानि विहाय प्राचीनसंस्कृतेः सविस्तरं वर्णनं क्वचिदन्यत्र उपलभ्यते वा इति अन्वीक्षणं क्लिष्टकरमेव। वेदानाम् उद्देशः धर्मबोधेन जरामरणसुखदुःखेन प्लावितसंसारसागरात् धर्माचरणद्वारा मुक्तिप्राप्तिरेव। इतिहासद्वये महाभारतस्य वैशिष्ट्यं किमिति चेत् वेदार्थस्य विशदीकरणं महत्वरूपेण आख्यानरूपेण च वेदार्थावगमे साहाय्यम् आचरन्तः इति।

**पत्रोद्धेशः**

व्यासप्रणीते श्रीमन्महाभारते पुरुषार्थसम्बद्धाः सर्वे विषया अत्र प्रोक्ताः । अत एवोच्यते- **धर्मो चार्थे च कामे च मोक्षे च भरतर्षभ** इति तत्र नवपर्वणि धर्मरहस्यम् उद्घाटयितुं धर्मस्वरूपं निष्कर्षयितुं च अनेककथारूपेण प्रस्तौति भगवान् व्यासः । तस्मिन् प्रसङ्गे मोक्षधर्मपर्वणि १९२ अध्यायेषु सुखदुःखागमहेतवः, स्वधर्माचरणस्वर्गफलावाप्तिः, नृतानृतस्वरूपं, धर्मसंरक्षणार्थम् आश्रमचत्वाराभिनिर्देशः, श्रेयस्करतमसुखं कथम् अध्यात्मज्ञानद्वारैव संप्राप्तुमर्हति, आत्मनःस्वरूपं, प्रवृत्तिनिवृत्तिलक्षणानि, क्षेत्रज्ञस्य

स्वलक्षणं, नित्यानित्यवस्तुविवेचनं, आत्मविद्या, इत्यादयः अद्वैतवेदान्तसारभूतविज्ञानप्रदर्शकाः। ततः मोक्षधर्मसाधनानि इति लघ्वंशमेकम् विशदीकृत्य नारदव्यासादिमहर्षिभिः पूर्वोक्तमोक्षसाधनानि कथम् अद्यतन-असंस्कृत-भौतिक-दशायाः निराकुल-मानवसमूहस्य निर्वृतिः अधुनाऽपि धीरेणावष्टम्भं कर्तुं शक्यते इति प्रस्थापतुमिदं पत्रं प्रयतते।

**मोक्षधर्मप्रसङ्गः**

अष्टादशदिनेषु प्रवृत्तमहाभरतयुद्धे सर्वत्र सर्वनाशं अवलोक्य दुःखाभिसन्तप्तं विषण्णमानसं राजानं युधिष्ठिरं प्रति पितामहः भीष्मः नानाविधान् अनुष्ठेयान् क्षुद्रफलान् राजधर्मान् आपद्धर्मांश्च उपदिष्टवान्। तत् श्रुत्वा अत्यन्तमुद्विग्नः धर्मजिज्ञासुः राजा युधिष्ठिरः सर्वापन्निवारणम् आत्यन्तिकश्रेयोहेतुं श्रोतुं वक्ति- पितामहेन राजधर्माङ्गत्वेन उपस्थिता आपद्धर्माः प्रोक्ताः । प्रशस्यतमो मोक्षधर्मः गृहस्थादीनां सर्वेषामपि अत्र अधिकारो दर्शितः । तान् भवान् कृपया वक्तुमर्हसि इति ।

**मोक्षधर्माः आत्ममोक्षनिमित्तम्**

लोके दृश्यमानानां सुखदुःखानां अत्यन्तहेतुः अतीर्णसंसार-बन्धनात् प्राप्तजननमरणादिशरीरसंबन्धः एव । अतः युधिष्ठिरं प्रति पितामहः भीष्मः तस्य शोकक्षयार्थम् आत्ममोक्षनिमित्तं वदति :

**यथा यथा च पर्येति लोकतन्त्रमसारवत् ।**
**तथा तथा विरागोऽत्र जायते नात्र संशयः ।।** (१७४.४)
**एवं व्यवसिते लोके बहुदोषो युधिष्ठिरः ।**
**आत्ममोक्षनिमित्तं वै यतेत मतिमान् नरः ।।** (१७४.५)

लोके स्थावरादिसत्यलोकपर्यन्ते दोषदर्शननिश्चयेन विविधरूपेणावस्थिते सति आत्मनोऽन्यत्सर्वं दुःखस्वरूपमिति श्रुत्यनुमानात् आत्ममोक्षनिमित्तं प्रयत्नम् कुरुष्व? इति। तस्य वचनं श्रुत्वा पृच्छति युधिष्ठिरः कथं बुद्ध्या शोकं तर्तुं शक्यते? तन्मे ब्रूहि इति :

**नष्टे धने वा दारे वा पुत्रे पितरि वा मृते ।**
**यया बुद्ध्या नुदेच्छोकं तन्मे ब्रूहि पितामह ।।** (१७४.६)

अत्र **ब्रह्मवित् ब्रह्मैव भवति** (मु.उ. ३.२.९) इति श्रुतिवाक्येन ब्रह्मज्ञानेन ब्रह्मभावो भवति इति अनुस्मरन् अपरं श्रुतिवाक्यं **तरति शोकम् आत्मवित्** (छा.उ. ७.१.३) आलोचयन् आत्मज्ञानार्थं शोकप्रतीकारकहेतुं शमादिकम् अनुतिष्ठेत् इत्यर्थे भीष्मः वदति ?

**नष्टे धने वा दारे वा पुत्रे पितरि वा मृते।**
**अहो दुःखमिति ध्यायन् शोकस्यापचितिम् तरेत्।।**
(१७४.७)

एवमुक्त्वा भीष्मः तस्य कस्यचित् विप्रमित्रस्य, राज्ञः सेनजितः च मध्ये प्रवृत्तं संवादम् अनुस्मरन् वदति-

**ये च बुद्धिमुखं प्राप्ता द्वन्द्वातीता विमत्सराः ।**
**तान् नैवार्था न चानर्था व्यथयन्ति कदाचन ।।**
(१७४.३५)

**बुद्धिमन्तं कृतप्रज्ञं शुश्रूषुमनसूयकम् ।**
**दान्तं जितेन्द्रियं चापि शोको न स्पृशते नरम् ।।**
(१७४.४१)

विवेकिनस्तु अन्तरस्थाऽपि क्लेशं न अनुभवन्ति यतः सुखदुःखाद्यतीताः ते परोत्कर्षं वा अपक्षतिं वा तेषां असहिष्णुत्वेन वर्जिताः। अपि च शास्त्रीयाभ्यासात्परं बुद्धिगतसामर्थ्यधारणात् दोषदृष्टिरसूयारहितं जितचित्तं प्राप्तवन्तः। अस्मिन् संदर्भे विप्रेण राजानं प्रत्योक्तं पिङ्गलोपाख्यानकथनं ज्ञापयित्वा कथं पिङ्गला इत्येवं वेश्या जितेन्द्रिया सुखं प्राप्तवती इति भीष्मेण कथितः । एतद्वृत्तान्तं श्रुत्वा युधिष्ठिरः तं पृच्छति।

**अतिक्रामति कालेऽस्मिन् सर्वभूतक्षयावहे ।**
**किं श्रेयः प्रतिपद्येत तन्मे ब्रूहि पितामह ।।** (१७५.१)

कालविलम्बो न कर्तव्यः यथा कालः जरारोगादिभिः नृणां पराभवं करोति अतः प्रशस्यतमं मोक्षधर्मं कथं प्राप्तुमर्हतीति उपदिश्यतां इति। अत्रारभ्यन्ते भीष्मस्य मोक्षधर्मविवरणानि साधनानि उपायानि च।

(अनुवर्तते.....)

## नीतिद्विषष्टिका

**लब्धोदयः खलजनः प्रथमं स्वजने करोति सन्तापम्।**
**उद्गच्छन् दवदहनः जन्मभुवं दारु निर्दहति।। १०७**

**துஷ்டனுக்கு மேன்மை வந்தால் முதலில் ஸஜ்ஜனங்களுக்குத் தீங்கு செய்வான். மனதில் தாபம் உண்டு பண்ணுவான். காட்டுத் தீயைப் பாருங்கள் காட்டு மரங்களின் உரைசலால் உண்டாகி முதலில் தனக்குக் காரணமான காட்டு மரங்களையே எரிக்கின்றது.**

# भक्तिः - मोक्षसाधनम्

Sri. C. BADRINARAYANAN
Research Scholar, SCSVMV, Kanchipuram

**नारायणाय परिपूर्णगुणार्वाय**
**विश्वोदयस्थितिलयोन्नियतिप्रदाय।**
**ज्ञानप्रदाय विबुधासुरसौख्यदुःख**
**सत्कारणाय वितताय नमो नमस्ते।।**

**भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती** इत्यभिधीयमानायां संस्कृतभाषायां न केवलं नानाविधशास्त्रग्रन्थाः साहित्यग्रन्थाः वर्तन्ते अपि च एतेषां मूर्धन्यरूपेण पुराणानि अपि सन्ति। तत्र श्रीमद्भागवतमहापुराणम् सर्वेषामपि प्रीतिकरं भवति यतः भक्तौ सुप्रसिद्धत्वात्।

सात्त्विकपुराणेषु अन्यतमं भवति पुराणमिदम्। भागवतमिति शब्दस्य व्युत्पत्तिः द्विधा भवति भागवतानाम् इदम् भागवतम्, भक्तानाश्रित्य पुराणं यत् भवति तद्भागवतम् इति कथ्यते। अपि च भगवतः इदम् - भगवन्तमनुसृत्य पुराणमिदं भवति। पुराणस्यास्य उद्देश्येषु भक्तेः स्थितिः प्रमुखं स्थानं भजते। यथा - सूतमहर्षिणा उक्तं यत्-

**स वै पुंसां परो धर्मः यतो भक्तिरधोक्षजे।**
**अहैतुक्यप्रतिहता यथाऽऽत्मा सम्प्रसीदति।।**

अर्थात्- यः निष्कामः मनुष्यः अधोक्षजं सर्वदा सर्वथा च भजते। अनया पूजया अन्तरात्मा, जगत्पतिः भगवान् विष्णुः तृप्यति, नन्दति च। अपि च- **कलौ तु केवलं भक्तिः ब्रह्मसायुज्यकारिणी** इति उक्त्यनुसारं जीव - ईश्वरयोः संबन्धं प्रकटीकर्तुं भक्तिरेव आधारभूतं भवति। अस्मिन् कलियुगे सामान्यः अपि आडम्बरं विना निर्मलभक्त्या भगवन्तं प्रीणाति।

**भक्तेः उत्पत्तिः**

एकदा नारदमहर्षिः यमुना नदीतीरे एकां रुदन्तीं युवतीं अपृच्छत्। भवती का? समीपस्थौ एतौ जर्जरौ कौ? त्वं किमर्थं रुदन्ती अस्ति? इति। सा प्रत्यवदत्-

**अहं भक्तिरिति ख्याता इमौ मे तनयौ मतौ।**
**ज्ञानवैराग्यनामानौ कालयोगेन जर्जरौ।।**

द्रविडदेशे उत्पन्नाऽहं, कर्णाटके प्रदेशे वर्धमाना अभवम्। महाराष्ट्रे कीर्तिं प्राप्य, गुर्जरप्रदेशे जर्जरतां प्राप्तवती। एवं बृन्दावनं पुनरागत्य यौवनावस्थां प्राप्तवती। परन्तु मम तनयौ ज्ञानवैराग्यौ कालवशात् वृद्धौ (उत्साहहीनौ) भूत्वा कष्टम् अनुभवतः। अस्य किं कारणम्? इति नारदम् पप्रच्छ। नारदः उवाच-

**त्वं तु भक्तिः प्रिया तस्य सततं प्राणतोधिका।**
**त्वयाऽऽहूतस्तु भगवान् याति नीचगृहेष्वपि।।**
**सत्यादित्रियुगे बोधवैराग्यौ मुक्तिसाधकौ।**
**कलौ तु केवलाभक्तिः ब्रह्मसायुज्यकारिणी।।**

यदा पापी मनुष्यः तव साहाय्येन (भक्त्या) भगवन्तं प्रार्थयति, तदा अन्तरात्मा अच्युतः तस्य गृहं प्रति याति। यतोहि ? अस्मिन् कलियुगे भक्तिमार्गः एव मोक्षप्राप्त्यै प्रशस्तः मार्गः भवति। अतः शान्तो भव! तव पुत्रौ उत्साहिनौ भूत्वा यथापूर्वं सन्तोषेण भविष्यन्ति।

**अन्यधर्माम्पुरस्कृत्य पुरस्कृत्य महोत्सवान्।**
**तदा नाहं हरेर्दासो लोके त्वां न प्रवर्तये।।**

अस्मिन् लोके सर्वत्रापि भक्तेः प्रवृत्तिः भवेत्। अनया एव जनाः जीवात्मनः उद्धरणेन परमात्मानं प्राप्नुवन्ति। अतः अहं त्वां लोकेऽस्मिन् प्रवर्तयितुं (प्रसारणाय) प्रयतिष्ये। नोचेत् अहं तु भगवद्भक्तेः योग्यः न भवेयम् इति शपथञ्च स्वीकरोति। अनेनैव अस्माभिः भक्तेः

उत्पत्तिः, स्वरूपम्, महत्त्वञ्च ज्ञातुं शक्यते।

**श्रीमद्भागवते निर्मलभक्तिः**

श्रीमद्भागवते तृतीयस्कन्धे कर्दमदेवहूतिदम्पत्योः पुत्ररूपेण भगवतः अवतारः अभवत्। जनेभ्यः आत्मज्ञानबोधनाय कपिलमहर्षि-रूपेण भगवान् अवतारं कृतवान्। एकदा तस्य मातरं भक्तेः महत्त्वकथनावसरे -

**देवानां गुणलिङ्गानाम् आनुश्रविककर्मणाम्।**
**सत्त्व एवैक मनसो वृत्तिः स्वाभाविकी तु या।।**

शरीरे विद्यमानगुणत्रयेषु, यदा राजसतामसगुणयोः अपेक्षया सात्त्विकगुणस्य वर्धनं भवति, तदैव भक्तेः उत्पत्तिः भवति। एवम् अस्माकं भोजनशैल्याः आधारेणाऽपि अस्याः वर्धनं भवति। यथा -

**दीपो भक्षयते ध्वान्तं, कज्जलं च प्रसूयते।**
**यदन्नं भक्ष्यते नित्यं जायते तादृशी मतिः।।**

अस्माकं आहारनियमानुसारं चिन्तनम्, एवं कर्म च भवति। अस्य आधारत्वेनैव पञ्चेन्द्रियाणां वशीकरणमपि भवति। पञ्चेन्द्रियाणां वशीकरणे कुलशेखराल्वार् इति महामुनिः स्व मुकुन्दमालायाम् व्यरीरचत्।

**जिह्वे! कीर्तय! केशवं मुररिपुं चेतो भज श्रीधरं**
**पाणिद्वन्द्व समर्चय अच्युतकथां श्रोत्रद्वय त्वं श्रृणु।**
**कृष्णं लोकय लोचनद्वय हरेर्गच्छाङ्घ्रियुग्मालयम्**
**जिघ्र घ्राण मुकुन्दपादतुलसीं मूर्धन्न ना माधोक्षजम्।।**

तस्मात् प्रत्येकेन्द्रियमपि भक्तिं प्रदर्शयेदिदि महामुनिः अकथयत्। वयं यावत् भक्तिं प्रदर्शयामः तावत् फलप्राप्तिरपि स्वयं भविष्यतीति नास्ति सन्देहः। नरसिंहावतारसमये प्रह्लादः स्वभगवन्तं नरसिंहदेवं स्तोत्रमकरोदेवम्-

**मन्ये धनाभिजनरूपतपःश्रुतौजः**
**तेजः प्रभावबलपौरुषबुद्धियोगाः।**
**नाराधनाय हि भवन्ति परस्य पुंसो**
**भक्त्या तुतोष भगवान्गजयूथपाय।।**
**विप्राद् द्विषड्गुणयुतादरविन्दनाभ**
**पादारविन्दविमुखाच्छ्वपचं वरिष्ठम्।**
**मन्ये तदर्पितमनोवचने हितार्थ-**
**प्राणं पुनानि स कुलं न तु भूरिमानः।।** (श्रीमद्भा.७.९.९)

**भक्तिः कथं जायते**

यथेच्छा वस्तुसौन्दर्याधीना तथा प्रीतिरपीति, न सा विधेया। यदि वस्तुनि गुणाः प्रतीयन्ते तदा गुणग्रहणपरायणस्य जायते तत्र प्रीतिः। तथैव भवति जिहासा द्वेषो वा यदि दृश्यन्ते दोषाः । एवं च भक्तेरविधेयत्वात् कथं सोत्पाद्या इत्याकाङ्क्षा स्वारसिकी । अत्रेयं समाधिरभिहिता नारदभक्तिसूत्रे **भगवद्गुणश्रवणकीर्तनात्** (ना. भ.सू..) इति अयमाशयः। वस्तुनि दृष्टे तन्निष्ठगुणश्रवणे च भवति प्रीतिरित्यानुभविकम्। प्रीत्युत्पादनार्थं माहात्म्यविज्ञानमावश्यकं, तदर्थं च श्रवणमिति गुणश्रवणकीर्तनादिभिर्भवति भक्तिः। विष्णुमहिमश्रवणं यथाऽभिवर्धते तथा भक्तिरपि विष्णावभिवर्धते। क्षीरे प्रीतिमतः, तस्मिन् एलाशर्कराकेसरादिसमाविशिष्टत्वज्ञाने यथा भवति अधिका प्रीतिः उपादेयताबुद्धिश्च जायते तथैव विष्णुविषयकमाहात्म्यातिशय-श्रवणादिनाऽपि भवत्यतिशायिनी प्रीतिः। विवृतोऽयमर्थः वादिराज-श्रीमच्चरणैः।

क्षीरादौ स्वादुत्वादितद्गुणकीर्तनेनैव स्नेहोत्पत्तिदर्शनात् स्नेहरूपभक्तेः प्रकारान्तरेणोत्पादयितुमशक्यत्वात् भक्त्यर्थं भगवन्महिमोच्यते इति।

(अनुवर्तते.....)

# भोजनविधिः

Dr. Anuradha.K,
Dept. of Panchakarma, Govt. Ayurveda college, Trivandrum

तत्र इदं आहारविधिविधानं अरोगाणां आतुराणां चापि केषांचित् काले प्रकृत्यैव हिततमं भुञ्जानानां भवति- उष्णं, स्निग्धं,मात्रावत्, जीर्णे, वीर्याविरुद्धं, इष्टे देशे, इष्टसर्वोपकरणं, नातिद्रुतं, नातिविलम्बितं, अजल्पन्, अहसन्,तन्मना भुञ्जीत, आत्मानमभिसमीक्ष्य सम्यक् -

तत्र - here, आहार-विधि-विधानम् - rules for comsuming food, अरोगाणाम् - healthy individual, आतुराणाम् -diseased individual, च अपि - and also, केषांश्चित् काले - at the suitable time, प्रकृत्या एव- depending on one-s body constitution, हिततमम्- behoofs, भुञ्जानानाम्- one who consumes, भवति- happens, उष्णम् - warm, स्निग्धम् - unctuous, मात्रावत्- in required quantity, जीर्णे- after the previous food has been digested, वीर्य-अविरुद्धम् - foods that are not contra in potency, इष्टे देशे - in a plesant atmosphere, इष्टसर्वोपकरणम् - with all the tools around, न अतिद्रुतम्- not in hurry, न अतिविलम्बितम् - not too slow, अजल्पन् - no chating, अहसन्- no laughing, तन्मना भुञ्जीत - concentrate on the food, आत्मानम् अभिसमीक्ष्य - wholesome diet to the soul.

इमानि आहारविधिविधानानि स्वस्थानां -आतुराणां प्रयोगार्थं उक्तानि भवति। यदि उष्णमेव आहारम् अश्नुते तर्हि तस्य अन्तराग्निं दीप्यते सुखेन जरणं सम्भवति स्निग्धाहारमपि एवं गुणान् ददति, तथा इन्द्रियाणि दृढीकरोति, शरीर धातूनां उपचयं सम्भवति, बलं वर्धते, वर्णप्रसादं अभिनिर्वर्तयति च । यदा मात्रावत् भुक्तं तस्य सर्वान् दोषान् अपीडयन् आयुः वर्धयति, अनायासेन पाकं गच्छति च । पूर्वं भुक्तं भक्ष्यं अवशिष्यते चेत् तदनन्तरं भुक्तमपि सम्मिश्र्य क्लेशान् जनयति । तथा वीर्यविरुद्धाहारैः पूर्वोक्तान् उपद्रवान् जनयन्ति। यदि इष्टे देशे, इष्टोपकरणैः सहितम् खादति तर्हि तस्य चित्ते उपघातकराणि न सम्भवन्ति । द्रुतं खादति वा तस्य भोजनस्य अप्रतिष्ठानं भवति । विलम्बितं खादति चेत् तस्य आहरः शीति- भवति, तृप्तिं न अधिगच्छति, विषमं पच्यते च । जल्पतः हसतः भुञ्जानस्य क्रमात् दोषाः भवन्ति । तस्मात् एवं विधानेन भोजनं खादेत्।।

## नीतिद्विषष्टिका

**सह वसतामप्यसतां जलरुहजलवद्भवत्यसंश्लेषः।**
**दूरेऽपि सतां वसतां प्रीतिः कुमुदेन्दुवद्भवति।। १०८**

**கெட்டவர்கள் ஒரே இடத்தில் வசித்தாலும் தாமரையும் ஜலமும் போல் ஒருவருக்கொருவர் ஒட்ட மாட்டார். பெரியோர்கள் பரஸ்பரம் தூரத்திலிருந்தாலும் சேருவர். உதாரணம், சந்திரனும், ஆம்பலும். சந்திரன் உதித்தால் ஆம்பல் மலர்கிறது.**

# बालकथा - १

(वृद्धपितामही चिरन्तनीति नामधेयवती बालान् कथयति)

(चित्रम् - सु.श्री.इन्दु, IV BAMS, SJS Ayurveda College, Chennai)

बालाः आकर्णयन्तु, असूयाम् अन्येषु मा कुर्वन्तु। असूया हि आत्मनः अपि शत्रुः भवति। अतः असूयायां मनः मा कुर्वन्तु भवन्तः। अत्र पूर्वजाः एकां कथाम् उदाहरन्ति। तत् कथयामि।

पुरा कालञ्जरराज्ये दिलीपः इति राजा अभवत्। तस्य पुत्रः शुद्धमतिनामा अभवत्। सः सुगुणैः युक्तः अवर्तत। तस्य राज्यस्य पार्श्वे कोटीरराज्यम् इति एकं राज्यम् अभवत्। तस्मिन् राज्ये विशुद्धनामा राजा अविद्यत। तस्य पुत्रः क्षुद्रमतिः इति नाम्ना अभवत्। सः जनकेन बोधितः अपि दुर्गुणैः युक्तः एव अविद्यत।

तौ द्वौ अपि राजकुमारौ सन्मतिनामकस्य ऋषेः गुरुकुलं अगच्छताम्। सः ऋषिः द्वयोः अपि बालकयोः बहुविधाः विद्याः अध्यापयत्। विद्यया युक्तः अपि क्षुद्रमतिः इतरेषाम् उपरि असूयावान् एव आसीत्। तस्य शुद्धमतेः उपरि अधिका असूया अवर्तत। शुद्धमतिः स्वस्य गुणैः सर्वान् अपि आवर्जयत्। तद् असहमानः क्षुद्रमतिः शुद्धमतिम् आपदि मग्नं कर्तुं समयं प्रत्यपालयत्। एतं विषयं गुरुः सन्मतिः अजानात्। स तौ शिष्यौ आहूय वनान्तरे गत्वा

दर्भाहरणं कर्तुं न्ययुङ्क्त।

तौ द्वौ अपि बालकौ वनेन गच्छन्तौ अभवताम्। मध्ये वियुक्तौ अभवताम्। तदा शुद्धमतेः पार्श्वे एकः यक्षः आविरभवत्। सः मम बुभुक्षा वर्धते, त्वाम् अहं निगिरामि। यदि आत्मनः रक्षाम् इच्छसि तर्हि तव मित्रं दर्शय इति अवदत्। तत् आकर्ण्य शुद्धमतिः भोः यक्ष, यदि तव बुभुक्षा तर्हि मामेव निगिर। मम मित्रम् जीवतु इति अकथयत्। तस्य वचनं श्रुत्वा यक्षः आः, तव त्यागबुद्धिं दृष्ट्वा तुष्यामि। तव पारितोषिकं ददामि इति उक्त्वा बहुविधम् आभरणजालं अदात्।

ततः परम् क्षुद्रमतेः पुरतः यक्षः आविरभवत्। भोः, मम बुभुक्षा वर्धते। त्वाम् अहं निगिरामि, नो चेत् तव मित्रं अन्यत् दर्शय इति अब्रवीत्। तत् आकर्ण्य असूयायुक्तः क्षुद्रमतिः भोः राक्षस, मम मित्रं शुद्धमतिनाम अस्मिन् एव वने अटति, तत्खाद इति अवदत्। तत् आकर्ण्य कुपितः यक्षः भोः सार्थकनाम क्षुद्रमते, मित्रद्रोहः असूया च असह्यौ गुणौ। त्वाम् एव निगिरामि इति उक्त्वा तस्य निगिरणाय उद्युक्तः अभूत्। तदा चकितः क्षुद्रमतिः आत्मनः दोषं अजानात्। किन्तु यक्षः तं मुखे अस्थापयत्। तदा क्षुद्रमतिः मां त्यज, इतः परम् असूयां न करिष्यामि इति अरुदत्। सद्यः एव सर्वं पर्यवर्तत। गुरुः सन्मतिः एव यक्षरूपेण परीक्षितुम् आगच्छत् इति अवागच्छत् क्षुद्रमतिः। लज्जया युक्तः ततः परम् इतरेषु सर्वेषु समबुद्धिकः अभवत्।

बालाः श्रुतम् वा। असूया आत्मनः अपि नाशं करोति। अतः असूयां त्यक्त्वा अन्येषु स्नेहम् आदरञ्च प्रदर्शयन्तु। सर्वेषां हृदयानि जयन्तु।

# पदरञ्जनी - १५

Dr. N. SRIDHAR,
Chennai

(अस्य समीचीनमुत्तरं editorsamskritasri@gmail.com प्रति ई-मैल् कर्तुमपि शक्नुवन्ति। समीचीनोत्तरप्रदातॄणां नामप्रकाशनम् अग्रिमसञ्चिकायाम्।)

## वामतः दक्षिणम्

१. अपक्वम्, पाकरहितम् (२)

३. पातालम् (४)

५. रचयति (३)

७. शुकपक्षी (२)
८. शिवः, शोचनीयः (३)
१०. तीक्ष्णरसविशेषः (२)
१२. गौरवम्, पाकः (२)
१३. रक्तवर्णमणिविशेषः, लोहितकः (४)
१४. उत्सवः, तेजः, ऊर्ध्वलोकेषु अन्यतमः (२)
१५. वेगः (२)
१६. तटः, नदीतीरम् (२)
१७. मेघः (२)
१८. चातकपक्षी, कं (जलं) कूजयति इति। (४)
१९. अन्धकूपः, कफः, तृणम् (२)
२१. कुम्भकारः (३)
२२. देवता (२)
२३. वयनं कुरु, वे-धातोः लोट् म.पु. एक.व. परस्मै (२)
२४. शब्दः (३)
२५. शत्रुः (३)
२६. कुशः, अश्वत्थः, उदुम्बरः (४)
२९. वराय कन्यासम्प्रदानम् (४)
३०. रात्रिः (२)
३१. गतिः, बन्धः, कारागारम् (२)
३३. तस्मात्, हेतुः (२)
३४. बुद्धिमान्, दक्षः (२)
३५. संस्कृतम् (३)

## उपरिष्ठात् अधः

१. शमीधान्यविशेषः, तुवरी, पीतपुष्पा (३)

२. चोरयति, खुज् धातोः लट् प्र.पु. एक.व. परस्मै (३)

४. मांसपिण्डम्, कज्जलम्, कदली (३)

६. अश्वः, सर्पः, गरुडः (२)

८. माणवकः (२)

१०. रज्जुः, गृहप्रकोष्टकः (२)

११. दुष्प्राप्यः, कश्चन राक्षसः (४)

१२. अल्पसरः (३)

१३. शल्यादेः शोधनम्, वायुः (२)

१४. कुलीनः (४)

१५. जटा (२)

१६. तालवृक्षः, चपेटः (२)

१७. उपवेष्टुम् आधारविशेषः, तृणम्, हस्तिगण्डस्थलम् (२)

१८. एन्द्रजाल-गीत-नृत्यादयः अस्याः भेदाः, चन्द्रस्य षोडषांशः (२)

१९. गर्दभः (२)

२०. प्रकृष्टयत्नः (३)

२१. दिवसस्य अष्टमो मुहूर्तः, सूर्यः, द्विजः, अतिथिः (एतेषां पर्यायवाची संबोधने) (३)

२२. चन्द्रः (४)

२३. केशमुण्डनम् (३)

२४. अक् लङ् म.पु. एक.व. परस्मै, सर्प इव वक्रगमनम् (२)

२५. विष्णुः, सर्वस्मिन् काले योगी (४)

२७. विशेषेण क्षतः (३)

२८. लज्जा (२)

३१. प्रियवाक्यम् (२)

३२. सर्पः (२)

**एकाक्षरी**

९. वर्द्धकः, स्फुटः, फललाभः

## पदरञ्जनी - १४ (उत्तराणि)

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| यो[1] | गः | | स्व[2] | | व[3] | रा | ट[4] | कः | |
| ज | | प्र[5] | दे | श | नी | | ल | | के[6] |
| ना[7] | कुः | | शः | | य[8] | ज | नम् | | लिः |
| | | कुः[9] | | व[10] | कः | | | व[11] | |
| अ[12] | ज्ञः | | | भ्रु | | का[13] | ल | ने | मिः |
| भी | | ब[14] | ड | वा | न[15] | लः | | च | |
| शुः | | हु | | ह[16] | तः | | शि[17] | रः | |
| | कृ[18] | पा | ही | नः | | भि[19] | क्षा | | पा[20] |
| को[21] | | दः | | | ग[22] | चा | | श[23] | प |
| प | | | क[24] | रु | ण | | कृ[25] | त | घ्नः |
| ना[26] | रि[27] | के | लः | | ना[28] | ग | पा | शः | |
| | ध | | | प[29] | थः | | णः | | द्वे[30] |
| य[31] | मः | | इ[32] | दम् | | धीः[33] | | द्वा[34] | षः |

(शिल्पम् - हलबेडुतः)

कृष्टा येन शिरोरुहे नृपशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः।।

वेणीसंहारम् ३.४७

Registration with Registrar News Paper of India 30478 / 77

SAMSKRITASRI

मैत्रीं भजताऽखिलहृज्जेत्रीम्

आत्मवदेव परानपि पश्यत।

युद्धं त्यजत, स्पर्धां त्यजत

त्यजत परेष्वक्रममाक्रमणम्

जननी पृथिवी कामदुघाऽस्ते

जनको देवः सकलदयालुः

दाम्यत दत्त दयध्वं जनताः

श्रेयो भूयात्सकलजनानाम्॥

Printed by: Zigma Graphics, 9/1, Thirtharappan Street, Triplicane - 5

Edited and Published by Sri S. Srinivasa Sarma on behalf of the

Samskrit Education Society (Regd.)



Old 212/13-1, New No, 11, St. Mary's Road, R.A. Puram, Chennai - 600028.